आरोग्यदायिनं शान्तं शक्तिमन्त्रादिपाठनैः।
यथा प्रमाणं भुक्त्वा च स्तुत्वा तान् देवतोत्तमान्।।५७।।
गण्डूषाचमनं पादप्रक्षाळनपुरस्सरम्।
विधाय विधिवत् राजा ताम्बूलोल्लसिताननः।।५८।।
चेटिकाकरसंलिप्तचन्दनश्रीमनोहरः।
तद्दत्ताभरणैर्दिव्यैः लसितः क्षितिवल्लभः।।५९।।
क्षणं विश्राम्य विधिवदासने शुभलक्षणे।
वारसीमन्तिनीगीतं निशम्य च मुदा तदा।।६०।।
ततो मध्याह्नकाले तु संप्राप्ते मन्त्रिभिर्नृपः।
राज्यकार्येषु संबद्धमानसः प्रविशेत् सभाम्।।६१।।

## राजसभा वर्णनम्

ब्राह्मणैः श्रोत्रियैस्सर्वैः विद्वद्भिः कविभिस्तथा।
अमात्यैः राजकार्यज्ञैः लेखकैः गणकैस्तथा।।६२।।
अन्यैश्च कार्यकुशलैः भूषितां चित्रमञ्जुलाम्।
सामन्तैर्भूमिपालैश्च प्रजाभिश्च समन्ततः।।६३।।
तत्रसिंहासनं नानारत्नावलिसमुज्ज्वलम्।
सामन्तराजमकुटीसेवितं च सपङ्क्तिकम्।।६४।।
महिष्यासनसंयुक्तं सेनापत्यासनोज्ज्वलम्।
अमात्यासनकल्पैश्च शोभितं पार्श्वयोर्द्वयोः।।६५।।
श्वेतच्छत्रालङ्कृतं च दिक्पालैरभिरक्षितम्।
धर्मस्वरूपं धर्मस्य वर्धकं नीतिदैवतम्।।६६।।

नृपश्चैवंविधं सिंहासनमारुह्य तत्त्ववित्।
प्रजारक्षणकार्येषु दत्तदृष्टिः क्रमात् भवेत्।।६७।।

## देयादेयदण्डनादिकथनम्

दातव्यं यच्च निर्दिष्टं यददेयं क्रमक्रमम्।
यत्तु दानकृतं काले यन्मृषा भाषितं नरैः।।६८।।
दोष्यारोपणमादिष्टं यच्च सन्ताडनादिकम्।
यच्चायशस्करं प्रोक्तं वधहिंसादिकं कृतम्।।६९।।
यन्मोहादक्रमं कर्म कृतं वा कारितं तु वा।
यच्च शास्त्रोल्लंघनं वा यदनाथं प्रकीर्तितम्।।७०।।
कुलक्रमागतं यत्तु यदप्राप्यं च निश्चितम्।
यत् धर्मनाशके कर्म बहुभिस्सहसाक्षिकम्।।७१।।

## दण्ड्यानां विशेषनिर्देशः

मध्ये सभं यन्निर्दिष्टं यच्चौर्यं कुलदूषणम्।
परदारस्पर्शदोषद्रोहादिर्यश्च कीर्तितः।।७२।।
तत्सर्वं मतिमान् बुध्या नृपो ज्ञात्वा विचारकैः।
यथा न्यायकरो भूत्वा धर्मसंस्थापको भवेत्।।७३।।
स्वदेशे परदेशे वा यत्कृतं यच्च निन्दितम्।
वेदमार्गो धर्ममार्गः यदि स्यात् दोषदूषितः।।७४।।

तद्धर्मरक्षणं कार्यं भूभृता नयचक्षुषा।
सस्यादिध्वंसने सेतुभेदने दाहकर्मणि।।७५।।
द्रोहकर्मण्यपि तथा छेदने तरुसन्ततेः.
विश्वासभञ्जने चैवं रन्ध्रकर्मण्यनादरे।।७६।।
यद्दोषादिकमादिष्टं तत्र दण्डकरो भवेत्।
एवमादीनि विविधकार्यजालानि चिन्तयेत्।।७७।।
ततो राज्याङ्गकार्याणि प्रजावत् परिचिन्तयेत्।
ये भृत्याः सेवका ये च ये च वीराः प्रकीर्तिताः।।७८।।
मेधायुक्ता बुद्धिमन्तः ये ये कार्येश्च निश्चिताः।
तेषां बहुमतिः कार्या गुणकार्यादि शीलनैः।।७९।।
एवं सेनेशसचिवाध्यक्षकार्यादिशीलनम्।
प्रार्थनाव्यतिरेकेण यत्कृतं दोषबुद्धितः।।८०।।
न्याय्यं तत्कार्यमादिष्टं यथा कालकृतं तथा।
तथाधिकारिभेदेन निर्दिष्टं लिखितं क्रमात्।।८१।।
स्वबुध्यालोच्य मतिमान् भूपतिस्तत्वकृद्भवेत्।
पत्रिकायां विलोक्यारात् श्रुत्वा वा साक्षिमूलतः।।८२।।
धर्मस्थापनकृत् राजा लभते शाश्वतं यशः।
निजप्रासादकार्याणि लाभव्ययगुणक्रियाः।।८३।।
अतिथिप्रमुखानां च साधूनामपि यत्कृतम्।
तत्सर्वं स्वयमालोक्य मन्त्रिभिर्वा यथोचितम्।।८४।।
न्याय्यकार्यं च तत्रापि स्थापयेत् क्षेमसिद्धये।
अन्तःपुरप्रियकरो भृत्यानां हितदायकः।।८५।।
देवताधर्मकृद्राजा लभते शाश्वतं पदम्।
अन्नदानादिविविधदानकृत् पात्रकालतः।।८६।।

यथापराधदण्डी च नीतिनेत्रः प्रतापवान्।
तेजस्वीगुणवान् तत्वग्राही कार्यस्वरूपवित्।।८७।।
सूक्ष्मग्राही गुणग्राही गुणी च विजितेन्द्रियः।
पक्षपातानभिज्ञश्च दयावान् रसिको बुधः।।८८।।
एवं विधगुणोपेतो भूपतिर्न्यायकृद्भवेत्।
मार्गादिस्थापने दक्षः सस्यक्षेत्रादिकार्यकृत्।।८९।।

## तटाकदेवतागारादिनिर्माणकथनम्

तटाकारामकर्ता च प्रजानां हितदायकः।
अग्रहारकृदग्र्याणां श्रोत्रियाणां विशेषतः।।९०।।
सम्माननां प्रकुर्वाणः समदर्शी दृढव्रतः।
देवतागारकार्याणि स्वयं वा सचिवादिभिः।।९१।।
देशकालानुकूलानि कारयेत् कार्यसिद्धिकृत्।
पुरकार्यन्तु विविधं कथितं सचिवादिभिः।।९२।।
तत्सर्वं स्वयमालोच्य यथा सौख्यप्रवर्त्तकः।
प्रस्थादिस्थितिकर्ता च वस्तुवास्तव्यकालवित्।।९३।।
नानाविधद्रव्यदायी वणिग्भिर्विविधैः पुरे।
नानारूपेष्वपि ग्रामेष्वपि सर्वं हितार्थिनाम्।।९४।।
साहाय्यकृच्च सततं नदीसत्वादिकृद्भवेत्।
एवं प्रजाक्षेमकारी विविधानां च पक्षिणाम्।।९५।।
जीवानामपि चान्येषां भूपतिर्जीवनप्रदः।
सत्यव्रतः सत्यवादी सत्यधर्मपराक्रमः।।९६।।

शास्त्रप्रमाणवेत्ता च शास्त्रकृच्च स्वयं तथा।
देवब्राह्मणभक्तश्च वात्सल्याक्रान्तबन्धुकः।।९७।।
धनग्रहणनीतिज्ञो दाने दत्तविलोचनः।
राज्यक्रियाफलज्ञश्च व्रतनिष्टः प्रतापवान्।।९८।।
डम्भासूयादिदोषैश्च सम्मुक्तः सूक्ष्मधीस्वयम्।
साधुसेवी कृतज्ञश्च फलवेत्ता फलोदयः।।९९।।
स्थिरप्रज्ञो दृढमतिः दृढकार्यो विवादवित्।
नानाकार्यस्वरूपज्ञः वर्णाश्रमहितप्रदः।।१००।।
देवानां च मुनीनां च साधूनां पादसेवकः।
पराशयज्ञः सुलभः गम्भीरस्वात्मवृत्तिभाक्।।१०१।।
नानाशाखाविधानज्ञो नानाकार्यविचक्षणः।
दीर्घालोकनदक्षश्च भूपतिः कीर्तिमान् भवेत्।।१०२।।
समयज्ञः कार्यदक्षः वाग्दायी धर्मरक्षणे।
अविलम्ब्यफलःप्रायो देशकालानुरूपतः।।१०३।।

## राज्ञा पद्मपत्रजलन्यायवद्भवितव्यमितिकथनम्

पद्मपत्रजलन्यायभोगासक्तो वशी बुधः।
परदारालोकनादिविमुखो विश्वनिश्चयः।।१०४।।
अतिथिष्वपि साधुश्च स्मितपूर्वाभिभाषणः।
काव्यालङ्कारलोलश्च हासक्रोधादिवर्जितः।।१०५।।
एवं विधैरनैकैश्च सुगुणैर्भूषितो नृपः।
मध्ये सभं राज्यकार्यजालं निर्वर्त्य तत्वतः।।१०६।।

सम्मान्यान् मानयित्वाथ प्रविशेत् भवनान्तरम्।
तत्रस्वाद्यफलादीनि भूञ्जीयान्नृपतिस्स्वयम्। ।१०७।।
स्निग्धैरमात्यैस्सहितः कौतूहलरसं भजन्।
ततस्सायन्तने प्राप्ते दीपमालाविराजिते। ।१०८।।
विलासशालां भूपालः प्रविशेत् कुतुकर्धये।
गीतवाद्यादिकं तत्र वादयेत् लक्षणक्रमम्। ।१०९।।
कौतूहलात्स्वयं वापि गीतिं वा कलयेत् बुधः।
चित्रादिकं स्वयं युक्त्या शास्त्रमार्गानुसारतः। ।११०।।

## कलाविद्याभिवृद्धिःकार्येति कथनम्

रचयेन्नृपतिः काले दैवं मानुषमेव च।
पतङ्गकलनं वापि विविधं चित्ररूपकम्। ।१११।।
नदीरूपं क्वचित् चित्रं भूधराणां स्वरूपकम्।
एवं नानाविधं चित्रं कलयेत् युक्तितःक्रमात्। ।११२।।
महिष्या सहितो वापि सचिवादिसमन्वितः।
रसिकैः कविभिर्विद्वत्सङ्घैरपि समन्वितः। ।११३।।
कवनं कलयेद्वापि समं वा विषमक्रमम्।
काव्यादिपाठनं वापि प्रमोदाय महीपतिः। ।११४।।
कलयेत्काव्यरसिकः शास्त्रपर्यायतोऽपि वा।
देशभाषादिकलनमपि मोहाय निश्चितम्। ।११५।।
एवं दिनक्रमात् भूपः स्वेच्छयाकलनं मतम्।
ततः सायन्तने काले समारुह्य हयाधिपम्। ।११६।।

महाप्रतोलीमार्गेण गच्छन् क्रोशद्वये स्थलम्।
आरामं वीक्ष्य वा सायं पारावरतटं तु वा।।११७।।
गिरिपार्श्वस्थलं वापि नद्यास्तीरमथापि वा।
निषेव्य मन्दपवनं तटाकादिसमुत्थितम्।।११८।।
उल्लासभाक् महीपालः पादचार्यथवा क्वचित्।
कथालापैर्वर्णनैर्वा स्निग्धैश्च सचिवादिभिः।।११९।।
एवं नीत्वा च तं कालं प्राप्नुयात् भवनं निजम्।
प्रक्षाल्य पादौ हस्तौ च गण्डूषाचमनादिकम्।।१२०।।
कृत्वा क्रमेण भूपालो नवपट्टधरः स्वयम्।
स्नात्वा वा सान्ध्यकर्मादीन् विधिना नियतव्रतः।।१२१।।
विधाय देवतागारं प्रविश्यादरवान् भुवि।
प्रणम्य परमेशानं स्तुत्वा च विविधैस्तवैः।।१२२।।
प्रदक्षिणीकृत्य काले सावरोधः कृताञ्जलिः।
ततः पुरोधसं राजा गुरुं मातरमेव च।।१२३।।
पितरं मातरं वृद्धान् पितृव्यादीन् क्रमात्ततः।
प्रणम्य निजनामोक्त्वाभिवाद्य विनयी नृपः।।१२४।।
विहारशालां तदनु प्रविस्याथ विहारभाक्।
गते तु प्रथमे यामे तनयाद्यैः स्वयं तु वा।।१२५।।
भुञ्जीयादन्नशालायां भक्ष्यं भोज्यादिकं क्रमात्।
चेटीभिः कलितं सर्वमलङ्कारादिकं तथा।।१२६।।
स्वयं धृत्वा महीपालो धृतताम्बूलवीटिकः।
गन्धानुलेपनं काले रत्नाभरणभूषितः।।१२७।।
चेटीभिः सचिवाद्यैश्च विहारस्थलभाक् मतः।
अथवा नाट्यशालान्तां प्रविश्य कुतुकग्रहः।।१२८।।

प्रासादस्थां पुरस्थां वा महिषीपार्श्वतस्तु वा।
सात्विकं राजसं भावं नाट्यं वा नाटकं तु वा।।१२९।।
निरीक्ष्य परमानन्दभरितः पृथिवीपतिः।
पारितोषिकदानेन पात्रस्थान् विधिना ततः।।१३०।।
मानयित्वा विशेषेण भद्रशालां प्रविश्य च।
रमणीभिः सह क्रीडां कलयेदात्मतुष्टये।।१३१।।
कथाभिर्विविधाभिश्च हृद्यैः पद्यादिगुम्भनैः।
स्पर्शनै वीक्षिणैर्वाक्भिः परिहासकथाभरैः।। १३२।।
ततः प्रविश्य शुद्धान्तं शयनान्तिकमेव वा।
रसयन् रसिको भूपः रमणीः सुन्दराकृतीः।। १३४।।
हृद्याभिः कामकेलीभिः एकान्ते सुखभाक् भवेत्।
गीतैश्च स्तुतिगर्भैश्च परमानन्दभाक् स्वयम्।।१३५।।
निद्रासुखं समापन्नो ध्यात्वा तां धर्मदेवताम्।
क्षत्रधर्मपरित्राता भवेत् भूपालसत्तमः।।१३६।।

## वेषान्तरधृतवता राज्ञा रात्रौ नगरपर्यटनकथनम्

शोधनार्थं क्वचिद्भूपो वेषान्तरविभूषितः।
अथवा निजरूपेण प्रविशेत् नगरीं निशि।।१३७।।
वीथीं प्रतोलीमथवा स्थलं यद्दोषमिश्रितम्।
आर्तिराशाभग्नता वा तत् ज्ञातुं पृथिवीपतिः।।१३८।।
पुररक्षाकरान् वापि योजयेद्वा विधानतः।
कालानुरूपमेतत्तु कलनीयमुदीरितम्।।१३९।।

प्रथमायां तथाष्टम्यां सप्तम्यां पूर्णिमादिने।
नृपेच्छावशतो वापि मृगयारसिको भवेत्।।१४०।।
दुष्टसत्ववधात् भीतिराहित्यमुपजायते।
अतो न मृगया गर्ह्या क्षेमाय किल निश्चिता।।१४१।।
राज्ञां मनस्तुष्टिकरं बलवृद्धिकरं तथा।
एवं द्यूतादिकं काल्यं बलमेधाविवर्धनम्।।
न्याय्यं सत्सङ्गमान्यं च यदुक्तं तत्समाश्रयेत्।। १४२।।
।।इति राज्ञां दिनचर्याक्रमः।।

## अथ द्वितीयोऽध्यायः

## अथ राज्ञां विशेषधर्मगुणवर्णनम् तेषां नीतिक्रमादिकं च।।

नारद उवाच-
गम्भीरप्रकृतिः श्रीमान् डम्भासूयादिवर्जितः।
जितेन्द्रियो वशी दान्तः गुणवान् सत्यवाक् नृपः।।१।।
मन्त्र्यादिभिः श्रोत्रियैश्च शास्त्रज्ञैः गुणिभिस्तथा।
प्रजारक्षानुकूलानि निर्दिष्टानि यथाक्रमम्।।२।।
यानि तत्सर्वमातिष्ठन् नृपतिः कीर्तिभाक् भवेत्
ना विष्णुः पृथिवीनाथः दिक्पालांशविराजितः।।३।।
तेजोनिधिर्धर्ममूर्तिः सत्यमूर्तिः कृपाकरः।
सर्वथा माननीयोऽसौ प्रजानां हितकृन्नृपः।।४।।
स एव जनकस्तासां प्रजानां परिकीर्तितः।
नृपेण ध्रियते धर्मः धर्मात्प्राणिसुखादिकम्।।५।।

नृपेण सत्यं जयति नृपो जयति सर्वतः।
अहर्निशं स्वदेशेषु देशान्तरतटे तथा।।६।।

## राज्ञां सत्यधर्मपरिपालनार्थं कल्याणगुणकथनम्

सत्यधर्मपरो राजा माननीयो जितेन्द्रियः।
नृपो दण्डधरःकाले न्यायकृत् रक्षकस्तथा।।७।।
नृपेण सर्वभूतानि मानितानि यथा क्रमम्।
नृपं विना न राज्यश्रीः प्राणिरक्षा कथं भवेत्।।८।।
नृपेण शत्रवो भीताः दूरात्तिष्ठन्ति भूतले।
सत्यधर्मपरो यत्र देशे वसति भूपतिः।।९।।
तस्मिन् वर्षति पर्जन्यः मेदिनी सस्यशालिनी।
गो ब्राह्मणानां भूतिश्च वर्धते नात्र संशयः।।१०।।
तपसा ब्राह्मणा भान्ति रक्षणात् क्षत्रियास्तथा।
वाणीज्यक्रियया वैश्याः शूद्रास्तत्पादसेवनात्।।११।।
वर्णानामाश्रमाणां च रक्षको नृपतिः किल।
अतस्तच्छासनं मान्यं सर्वैरपि च नित्यशः।।१२।।
बालो युवाथवा वृद्धो भूपालो मान्य एव च।
वह्न्यंशो धनदांशश्च वासवांशश्च भूपतिः।।१३।।
दण्ड्यानां दण्डदो भूपः तथानिन्दाकृतामपि।
करग्रहणयोग्यश्च पारितोषिकदस्तथा।।१४।।
धर्मवृद्धिकरः पापरोधको नृपसत्तमः।
लोककार्यस्वरूपज्ञः त्रिकालज्ञानभावनः।।१५।।
नानाभाषाकोविदश्च भवितव्यो नराधिपः।
रक्षणप्रतिभूः राजा सर्वत्र परिदृश्यते।।१६।।

व्यवस्थाकृच्च मानज्ञः नानोपायैश्च पोषकः।
कुलशीलक्षयकृतां तीव्रदण्डकरस्तथा।।१७।।
रक्षको विविधोपायैरनाथानां च रक्षकः।
मार्गरक्षाकरो भूपः स्थलरक्षाकरश्च सः।।१८।।
स एव धर्मकृल्लोके निश्चितः परमर्षिभिः।
वनपर्वतदुर्गाणां रक्षकश्च निरूपितः।।१९।।
धर्मनिष्ठस्य भूपस्य शासनानुगुणं भुवि।
देवाः साह्यं प्रकुर्वन्तीत्येतत् वेदानुशासनम्।।२०।।
आशीर्नयन्त्यनुदिनमेषु ते परमर्षयः।
राज्यं कर्मजालं तु प्रजानां हितदायि तत्।।२१।।
तद्राज्यशासनान्नित्यं वर्धते नात्र संशयः।
तेजस्विनो नृपस्याज्ञा मानिता शात्रवैरपि।।२२।।
कालं स्थलं प्रयोगं च ज्ञात्वा भूपतिरन्वहम्।
सत्यधर्मपरो नैजं शासनं कलयेत् क्रमात्।।२३।।
मन्त्र्यादिभिस्तु निर्दिष्टं स्वयमालोच्य भूपतिः।
चक्रवर्ती महातेजाः सारासारस्वरूपवित्।।२४।।
निजाज्ञां प्रेरयन् काले जयीमङ्गळभाक् ध्रुवम्।
राष्ट्राणि नगरादीनि वनान्युपवनानि च।।२५।।
रक्षन्त्याज्ञाकरा नेतुः देवताश्च तदाश्रयाः।
आशीर्नयन्ति भूपालास्तेन ते चिरजीविनः।।२६।।

## न्यायमार्गानुयायिनो राज्ञ एव सत्कलत्रादिरिति कथनम्

सत्कळत्राश्च सत्पुत्राः सत्यधर्मरताः प्रजाः।
भासन्ते नयनिष्ठस्य नृपतेराज्ञया भृशम्।।२७।।

आर्तिप्रशमनादीनि कलयन्ति महीभृतः।
तटाकानां गोपुराणां दुर्गाणां देवसद्मनाम्।।२८।।
सेतूनां च मठादीनां ग्रामाणां वा क्वचित् स्थले।
मण्टपानां मानवादिभौमानां विविधात्मनाम्।।२९।।
रक्षाकरी नृपस्याज्ञा नानोपायैरहर्निशम्।
अग्नेर्भयं जलभयं दुष्टसत्वभयं तथा।।३०।।
पिशाचराक्षसादिभ्यो भयं यच्च प्रकीर्त्यते।
तत्सर्वं शमयत्याज्ञा धर्मनिष्ठस्य भूपतेः।।३१।।
नित्यनैमित्तिकभिदा विभक्तानि नृपाज्ञया।
धर्मकार्याणि नियमात् स्थितिभाजां महीतले।।३२।।
धर्मात्तुष्यन्ति देवाश्च धर्मरूपःपरःप्रभुः।
धर्मरूपं नृपं जह्यान्न द्वेष्टि पृथिवीतले।।३३।।
कामाद्वा यदि वा लोभादिति वेदानुशासनम्।
व्यवस्थापनकर्तासौ नृप एव विशिष्यते।।३४।।
सारासारप्रदर्शी च निगूढार्थप्रदर्शकः।
धरणी भारवाही च यशस्वी विजितेन्द्रियः।।३५।।
ख्यातस्सर्वत्र देशेषु नयचक्षुर्नृपोत्तमः।
धर्मस्वरूपवित् ज्ञानी साधुसेवी हितोदयः।।३६।।
सतां वृत्तिप्रदायी च नृप एव महीयते।
दुरितक्षयकर्तासौ धर्मसंस्थापनान्नृपः।।३७।।
जगतामभिनेतासौ सच्चारित्रौ महीपतिः।
भवितव्यो महीं रक्षन् प्राप्नोति विपुलं यशः।।३८।।
सत्यधर्मरतस्यास्य वशे तिष्ठति भूपतेः।
सर्वाणि भूतानि सदा नयस्थितिकरो मतः।।३९।।

दण्ड्यांश्च दण्डयन् राजा दयावान् नीतिलोचनः।
यस्सर्वभूतेषु हितो वेदवित् शास्त्रपारगः।।४०।।
पुण्यकार्यकरो नित्यं ब्राह्मणत्राणदीक्षितः।
वाग्मी चाचारनिरतो निष्पापः पुण्यकर्मकृत्।।४१।।
देवतानुग्रहं प्राप्य चिरञ्जीवति भूतले।
अपसर्पणशीलस्तु युद्धरङ्गात्तु गर्ह्यते।।४२।।
ततो नृपस्तु सम्मान्यो जयी पूर्णबलान्वितः।
दण्ड्यदण्डीविशेषेण दिवि मान्यो बुधैरपि।।४३।।
पार्श्वरक्षः पृष्टरक्षः गतिं प्राप्य भवेन्नृपः।
पुरःकञ्चुकयोधाद्यैः रक्षितो राजवल्लभः।।४४।।
परं सुखमवाप्नोति कीर्तिं तेजश्च विन्दति।
श्रमसाध्यमसारञ्च यन्निर्दिष्टं सुधीजनैः।।४५।।
क्वचित्तदपि साध्यं त्वित्येव कर्मकरो नृपः।
महत्फलमवाप्नोति पूज्यते शात्रवैरपि।।४५।।

## न्यायमार्गात् पतितस्य राज्ञो दुर्गतिकथनम्

अकार्यकृत् भूपतिस्तु शप्तो भवति निष्प्रजः।
नरकादि समाप्नोति तस्मात् हितकरो भवेत्।।४६।।
निन्द्यकार्यकरो भूपो निन्द्य एव न संशयः।
अतस्तु साधुसंयोगः सदाचारो गुणान्वितः।।४७।।
पापभीकर्जितक्रोधः निष्कलङ्कस्स्वधीक्रियः।
इति सद्गुणसम्पन्नं श्रुत्वा भूपं निरामयम्।।४८।।

श्रुत्वा भीत्या दूरतस्तु तिष्ठन्ति रिपुभूभृतः।
स्थिरीकृतात्मरक्षाद्यः जितनैजारिबृन्दकः।।४९।।
स्तूयते सततं लोके नारदेन महर्षिणा।
क्षोभप्रदोऽरिबृन्दस्य तस्करादेस्तथा नृपः।।५०।।
प्रजानां हितकृल्लोके कीर्तिमान् भाति नित्यशः।
धैर्यभूष्यो नीतिचक्षुः शास्त्रज्ञः साधुसेवकः।।५१।।
प्रजानामार्तिशमनं कुर्वन् राजति भूतले।
दयया स्निग्धहृदयः कृपयाक्तविलोचनः।।५२।।
स्मिताननो महीनाथः कीर्त्यते सुन्दरीजनैः।
रक्षकस्सर्वभूतानामध्यक्षो नृप एव हि।
स एव कालयोगेन धनायव्रयकारकः।।५३।।
सङ्कोचकृल्लाभकृच्च स्थलनेतृवशक्रियः।
व्याध्यादीनाञ्च शमनं कलयन् भूमिवल्लभः।।५४।।
प्रजानां हितकृत् राजा रञ्जको भवति ध्रुवम्।।।५४a।।
जातिव्यवस्थाकारी च प्रकृतेः सत्क्रियाकरः।।५६।।
व्यत्यस्तचिह्नराहित्यमपि सम्पादयन् स्थले।
क्षेमकृत् प्रकृतीनान्तु स एव नृपतिर्मतः।।५७।।
वाक्पारुष्याय युद्धाय ये तु लोके कृतोद्यमाः।
अक्रमस्थानभाजश्चापनीत्यालिङ्गिताश्च ये।।५८।।
ते सर्वे दण्डनीयाश्च धर्मनिष्ठेन भूभृता।
यत्तु विश्वजनीनं हि यदारब्धं तु साधुभिः।।५९।।
तत्समाप्तिक्रियां राजा कलयेत् सचिवादिभिः।
क्वचित् स्वयं निरीक्ष्यारात् ज्ञात्वा तस्य स्वरूपकम्।
उचितं कर्म कुर्वाणाः मान्यो भवति साधुभिः।।६०।।

अरुचिप्रदवाक्यानि न ब्रूयात्तु कदाचन।
अकाल्यमश्लाघ्यमपि वर्जयित्वा महीपतिः।।६१।।

## शरणागतसंरक्षणकथनम्

स्वादुवाक्यानि तु फणन् सुरेन्द्र इव राजते।
रिपुर्वा यदि वा दीनः रिपुपुत्रादयोऽपि वा।।६२।।
अभयार्थं यदागम्य स्वस्नेहमभिवाञ्छति।
तं रक्षन् विविधोपायैः यशस्वी भवति ध्रुवम्।।६३।।
तथातिथीनां सर्वेषामातिथ्यमपि कारयन्।
यथार्हं शोभते राजा दिवि चन्द्र इवामलः।।६४।।
स्वयमालोच्य यत्प्रोक्तं न्याय्यं जनहितप्रदम्।
तत्कुर्वन्नेव नृपतिः सर्वक्षेमाय निश्चितः।।६५।।
समयोचितचातुर्यः समयोचितपौरुषः।
कालानुकूलवादी च स एव नृपवल्लभः।।६६।।
आपादशिखरं यञ्च ज्ञात्वा कार्यं विनिश्चितम्।
तत्तथाकार्यमित्येवं राज्ञां कर्म हितप्रदम्।।६७।।
अन्यथा न फलप्राप्तिरपकीर्तिश्च विन्दति।
वाचयित्वा स्वयं श्रुत्वा दृष्ट्वा वा क्वचिदादरात्।।६८।।
महीपःकर्मकृल्लोके लोकवन्द्यो न संशयः।
अक्षरज्ञानहीनश्चेत् स एव पशुरुच्यते।।६९।।
स्नानकाले तथा होमे जपकर्मणि वा पुनः।
क्षत्रियाणां यदादिष्टं शास्त्रज्ञैर्मुनिभिः क्रमात्।
तदेव कार्यमादिष्टं भूष्णुना भूभृतानिशम्।।७०।।

अक्रमेण क्रियां कुर्वन् पापभाक् निन्द्य एव सः।
अतो यथोक्तकारी तु काले काले महीपतिः।।७१।।
परमं सुखमालिङ्ग्य कीर्तिं तेजश्च विन्दति।
दुराशा सर्वभूतानां हानिदा निश्चिता बुधैः।।७२।।
अतो महीपतिर्धीमान् शास्त्रज्ञो लोकतत्त्ववित्।
दूरीकुर्वन् दुराशांस्तु राजते कीर्तिभाक् भुवि।।७३।।
सद्गुणानाञ्च निलयः त्यक्तपापक्रियस्स्वयम्।
महीपतिस्तु यो लोके शुचिश्च विजितेन्द्रियः।
वृद्धोपसेवको नित्यं नीतिचक्षुश्च धर्मकृत्।।७४।।
जयश्रियालिङ्गितःसंवर्धते नात्र संशयः।
युक्त्या कार्यकरान् काले सचिवान् गुणभूषणान्।।७५।।
साधुवृत्तांश्च राज्याङ्गे स्थापयित्वा महीपतिः।
स्वयमुद्वीक्ष्य च तदा काले काले कृतादरः।।७६।।
तस्य राज्यं कुलं सम्पत् वृद्धिमाप्नोति नित्यशः।
प्रमत्तान् दुर्गुणान् दुष्टान् दण्डयित्वा विशेषतः।।७७।।
राज्याङ्गे धर्मसञ्चारं स्थापयन् भूमिवल्लभः।
पुरन्दराद्यैर्वसुधैः सम्मान्यो भवति ध्रुवम्।।७८।।
कोशगेहं धान्यगेहं द्रव्यगेहं तथा क्वचित्।
पूरयेत् पृथिवीपालः काले काले विशेषतः।।७९।।
तदेव सर्वभूतानां रक्षकं किल निश्चितम्।
अप्रमत्तस्त्वतो भूपो रक्षयेत् तत् यथोचितम् ।।८०।।
प्रजाभिश्च भटैर्भृत्यैः धीरैः कालानुरूपकम्।
तेन तुष्यन्ति पितरो देवास्सर्वगणास्तथा।।८१।।

गोदानं वा सत्क्रियां च करिष्यामीति मानवः।
त्यक्त्वा सङ्कल्पमचिरात् तत्क्षणादेव कालतः।।८२।।
कार्यकारी प्राप्तकीर्तिरिति शास्त्रेषु निश्चितम्।
भूपतिस्तु विलम्बेनाविलम्बेन च भेदतः।।८३।।
कालतःकर्मकुर्वंस्तु तेजस्वी भवति ध्रुवम्।
कार्यं तु विविधं प्रोक्तं कालादि च तथा मतम्।।८४।।
तस्मात्तदनुसारेण चोपदेशेन धीमताम्।
स्वयमालोच्य मन्त्र्यादेरालोच्य च वचो मुहुः।।८५।।
अनिन्द्यं कर्म कुर्वंस्तु यशस्वी सुखभाक् नृपः।
उन्नतात्पतनं शीघ्रम् अधोभागेऽपि निश्चितम्।।८६।।
एवं त्वधस्थलादूर्ध्वगतिस्तु बहुदुर्लभा।
एवं विधं कर्मलोके लाभालाभमुखक्रमम्।।८७।।
वृद्धांस्तु ब्राह्मणान् भूपो यथाकालं समर्चयन्।
तेजस्वी च यशस्वी च कीर्तिभाक् नात्र संशयः।।८८।।
बुद्धेस्तु दूरगं वस्तु परं ब्रह्म निगद्यते।
योगेन तपसा चापि प्राप्यं तच्च वयः क्रमात्।।८९।।
नियम्य चेन्द्रियग्रामं योगी भवति भूपतिः।
देवैश्च श्लाघितस्स्वर्गे सुखमाप्नोति योगतः।।९०।।
यस्मिन् स्थले यदादिष्टं कार्यमित्येव सूरिभिः।
तत् तत्रैव क्रमप्राप्तिहेतुकं कार्यमेव च।।९१।।
तदेव श्रेयसे भूपकुटुम्बस्य सुनिश्चितम्।
अनश्वरं कर्म कुर्वन् योगी भवति पण्डितः।।९२।।
भूपतिस्तु तथा कुर्वन् यशः कायेन जीवति।
त्यक्तपापश्च तेजस्वी मोदते दिवि नित्यशः।।९३।।

सुदीर्घलोचनासक्तः क्वचिद्भवति निष्फलः।
झटित्येव क्रियाकारी तथा युक्तिविवर्जितः।।९४।।
लोके दृष्टो निष्फलस्तु तस्मात् युक्तिर्हितप्रदा।
युक्तिस्तु तादृशी प्रायो मन्त्र्यधीना विनिश्चिता।।९५।।
मन्त्रिणो बहवःकाले स्थापनीयाः क्रियाधराः।
तद्युक्त्या स्वयमालोच्य शकुनान्यपि वीक्ष्य वा।।९६।।
निरीक्ष्य पूर्ववृत्तानि कर्म कुर्वन् हि शोभते।
यानि विच्छेदवाक्यानि सल्लापे भाषणे तथा।।९७।।
तानि नैव प्रयुञ्जीत हितापेक्षी महीपतिः।
विविधं वाक्यमुक्त्वा तु निष्फलो निन्द्यतां गतः।।९८।।
बहवस्तत्र दृष्टान्ते कीर्तिताश्च विशेषतः।
अतो युक्त्या क्रियाकारी वाक्दायी नृपतिर्भुवि।।९९।।
महाफलमवाप्नोति तेजस्वी भाति वन्दितः।
भयकाले च युद्धादौ स्वात्मानं न प्रकाशयन्।।१००।।
शङ्कितो नृपतिस्तिष्ठन्नपकीर्तिं धनक्षयम्।
राज्यभ्रंशादिकं प्राप्य क्षीयते नात्र संशयः।।१०१।।

## युद्धकाले राज्ञां कर्तव्यकथनम्

अतो धैर्यं समालम्ब्य खड्गहस्तो महीपतिः।
सबलः सचिवाद्यैश्च संवृतो धर्मतत्त्ववित्।।१०२।।
स्वात्मप्रकाशनात्काले जयलक्ष्म्यादिकं भजन्।
प्रजानां हितकारी च कीर्तिभाक् च भवेत् ध्रुवम्।।१०३।।

मैत्रीं सम्पादयन् भूपः सर्वत्र समवृत्तिभाक्।
स्वदेशे परदेशे वा पूज्य एव विनिश्चितः।।१०४।।
गुप्तमूलश्च मन्त्रज्ञः सबलस्साधुसंवृतः।
परदेशं नृपो गच्छन् यथाकालं यथाक्रमम्।।१०५।।
स एव मान्यो भवति त्वन्यथा निष्फलो भवेत्।
अयुक्तवाक्यदाता तु क्रियाकारी बली पुमान्।।१०६।।
दण्ड्य एव महीनेत्रा निश्चितश्शास्त्रपारगैः।
तेन सुस्थिरतां लक्ष्मीः भजते नात्र संशयः।।१०७।।
समाहूतोऽपि यो लोके नैवायाति मदान्वितः।
क्रमतो न्यायतश्चायं दण्ड्य एव च कीर्तितः।।१०८।।
मदान्वितं कुलभ्रष्टं निन्द्यकर्माणमेव च।
तनयं वा भूपतिस्तु नीतिज्ञो कर्मतत्ववित्।।१०९।।
निष्काशयेत् स्वदेशात्तु वर्णसङ्करकारिणम्।
महापापिनमेवं हि कारयेदप्रमत्ततः।।११०।।
तदेव श्रेयसे लोके निश्चितं सुरनायकैः।
स्वापराधं च यो ज्ञात्वा प्राणार्थी याचते ध्रुवम्।।१११।।
महापराधकृत्सोऽपि स्वल्पदण्डश्च निश्चितः।
अथवा तर्जयेद्राजा सभायां युक्तितः क्वचित्।।११२।।
शोषयेद्वैरिनिवहमन्याय्यगतिलोलुपम्।
सबलो नीतिमान् राजा चिरमालोच्य तत्वतः।।११३।।
सान्त्वयेद्वा तर्जयेद्वा यथाक्रममतन्द्रितः।
तदानीमेव सर्वत्र धर्मदेव्याः प्रचारणा।।११४।।
श्रुतिः स्मृतिः प्राप्तपदा मनांसि च मनीषिणाम्।
इति देवैर्मुहुर्गीतं नारदेन महर्षिणा।।११५।।

तदेव सर्वभूतानां क्षेमदं च सुनिश्चितम्।
वशी व्रतं समातिष्ठन् व्रतकाले विशेषतः।।११६।।
सचिवादिषु राज्याङ्गधुरं सत्सु प्रयोजयेत्।
आत्मस्तुतिविहीनश्च भवितव्यो नराधिपः।।११७।।

## अपराधदण्डने क्रमवर्णनम्

असाध्यं कर्म कुर्वन्नप्यवलिप्तकलङ्ककः।
दण्ड्यानदण्डयन् राजा नैव कीर्तिमवाप्नुयात्।।११८।।
अदण्ड्यान् दण्डयन् भूपो नैव कीर्तिमवाप्नुयात्।
अल्पापराधे दण्डस्याधिक्यदश्च तथा मतः।।११९।।
यथापराधदण्डस्तु तस्मात् सर्वत्र कीर्तिभाक्।
गुरुभक्तिश्चात्मयोगः प्रजारक्षा च सन्ततम्।।१२०।।
नृपाणां श्रेयसे शास्त्रसेवनं च यथाक्रमम्।
शास्त्रेषु मुनिभिश्चोक्तं नारदेन महर्षिणा।।१२१।।
पापभीरुर्जितक्रोधकामादिः शास्त्रपारगः।
उत्साहवान् बली राजा सत्सखो वर्धते भृशम्।।१२२।।
कालुष्ये वा रोगजाले सङ्कटे वान्यरूपके।
धैर्यमालम्ब्य नृपतिः युक्त्या तच्छान्तिमाचरेत्।।१२३।।
आत्मरक्षा प्रजारक्षा महिष्या रक्षणं तथा।
त्रिविधं मुख्यकर्मेति विदुर्वेदविदो बुधाः।।१२४।।
अमितैर्धैर्यभाक् नित्यं धर्मत्राणपरायणः।
भूपतिः पूज्यते देशे सर्वैरपि दिशां मुखे।।१२५।।

## राज्ञां जननकारणकथनम्

परित्राणाय साधूनां दमनाय दुरात्मनाम्।
नृपाणां जननं प्रोक्तं शास्त्रज्ञैर्वसुधैरपि।।१२६।।
अतस्सर्वत्र भूपालाः मान्याः सङ्कीर्त्य वैभवाः।
धैर्यवन्तो दयावन्तो विपन्नाशकराश्च ते।।१२७।।

## राज्ञां स्वरूपवर्णनम्

पञ्चानामपि भूतानामंशैस्ते प्राप्तवैभवाः।
भुवस्थलं समाश्रित्य राजन्ते देवसन्निभाः।।१२८।।
किरीटमकुटोद्भासिमौलयस्तुङ्गदेहकाः।
आजानुलम्बितकराः पृथुवक्षस्थलाश्च ते।।१२९।।
दयार्द्रलोचना नित्यं निर्भयाः पूर्णपौरुषाः।
धीमन्तो धैर्यवन्तश्च राजन्ते ते सुमेधसः।।१३०।।
विधिज्ञाः कार्यदक्षाश्च मृगयापाटवाश्च ते।
भूमिपाला नित्यबलाः देवांशा मान्यवैभवाः।।१३१।।
बाला अपि युवानो वा वृद्धा वा वसुधाधिपाः।
गम्भीराकृतयो भान्ति भूधूर्वहननिर्भराः।।१३२।।
शान्ता अप्यतितीव्राश्च दुस्साध्यास्सुलभाश्च ते।
सुन्दराङ्गाश्च युवतीचित्तहर्षप्रदायिनः।।१३३।।
गम्भीरभावास्सततं मृदुवाचोऽपि दुस्सहाः।
सूर्यवंशोद्भवा भूपास्तथा चन्द्रकुलोद्भवाः।।१३४।।
आपादलम्बिकौशेयाः सतामार्तिप्रभञ्जकाः।
सर्वप्रकृतिरक्षासु कृतदीक्षास्स्वभावतः।।१३५।।

अन्तःपुरे मन्मथवत् सभायामिन्द्रसन्निभाः।
रणे कपर्दितुल्याश्च दाने कल्पद्रुवन्नृपाः।।१३६।।
नानाभाषासु कुशलाः नानाशास्त्रविशारदाः।
नानोपायप्रयोक्तारो धर्मस्थापनसेतवः।।१३७।।
विपद्धिमानीसूर्यास्ते रक्षादेवांशभासुराः।
भूपाला भान्ति सततं धर्मत्राणपरायणाः।।१३८।।
दुष्टपैशाचसन्मन्त्राः सच्चरित्रप्रवर्तकाः।
विवेकवर्धकाश्चापि नानाविद्यार्थिपोषकाः।।१३९।।
देवानां सदनानां च ब्राह्मणानां विशेषतः।
रक्षका विविधोपायैः वाणिज्यस्यापि रक्षकाः।।१४०।।
मनोज्ञाः शुभवाचस्ते जागरूकाश्च कर्मसु।
अप्युच्छ्रायपदस्थास्ते गर्वडम्भादिवर्जिताः।।१४१।।
तत्पालनन्तु सच्छास्त्रनिदानं परिकीर्तितम्।
वर्णाश्रमाचाररक्षादीक्षिताः पुण्यकारिणः।।१४२।।
यागादिभिर्देवतृप्तिदायिनो धर्मसेतवः।
व्यवस्थां च विवेकं च प्रकृतीनां तदा तदा।।१४३।।
दत्वा ते पोषकाः ख्याताः भान्ति भूपाः क्षमातले।
नृपं विना न राज्यश्रीः शोभते बहुभूषणा।।१४४।।
देवानां प्रतिमारक्षाकर्मण्यपि दृढव्रताः।
सम्पादनेषु दानेषु ते शक्ता एव निश्चिताः।।१४५।।
गवां च पतगानां च रक्षकाश्च गवामपि।
यौवनेऽप्यप्रमत्ताश्च रक्षकाश्चापि सर्वथा।।१४६।।
नृपाः जितश्रमाःकामं व्यर्थश्रमविवर्जिताः।
स्वीकृतानन्तसत्कार्याः फुल्लाम्भोजमुखाश्च ते।।१४७।।

देवब्राह्मणभक्ताश्च डम्भासूयादिवर्जिताः।
अनन्तशक्तयस्ते तु भूभारवहनक्षमाः।।१४८।।
पुत्रवत् पितृवत् कार्यकालेषु हितदायिनः।
अलङ्कृतिप्रिया नित्यं साधुसम्मान्यवृत्तयः।।१४९।।
अनाथानां च जनकाः सूक्ष्ममेधासमुज्वलाः।
तत्तत्कार्यार्थतत्वज्ञाः क्षमावन्तो निरामयाः।।१५०।।
नानातापहरा नित्यं प्रकृतीनां हिते रताः।
वृद्धिभाजो वृद्धिकराः पूर्णपौरुषशालिनः।।१५१।।
धनैर्धान्यैश्च रत्नैश्च पट्टाद्यैर्वस्त्रकैरपि।
नानाभरणजालैश्च सुन्दरीभिश्च नित्यशः।।१५२।।
खेलन्तोऽपि महीशानाः दुर्गुणैस्तु विवर्जिताः।
प्रजाक्षेमाय कल्प्यन्ते काले काले हितक्रियाः।।१५३।।
साधुभिर्मन्त्रिभिश्चैवं ब्राह्मणैर्वेदपारगैः।
मुनिभिर्देववर्यैश्च यन्निर्दिष्टं च यत्कृतम्।।१५४।।
तदालोच्य स्वयं बुद्ध्या कृत्वा तच्छ्लाघनं मुहुः।
तथा कुर्वन्ति भूपालाः प्रजानां क्षेमवृद्धये।।१५५।।
काले काले नतिपराः गम्भीरा अपि नित्यशः।
धर्मरक्षाकराश्चैव यागरक्षकरास्तथा।।१५६।।
देवेषु ब्राह्मणेष्वेते पूर्णभक्तिविभूषणाः।
रक्षाच्छायाप्रदा भूपाः निर्गतीनामनेकधा।।१५७।।
सन्मार्गदर्शका नित्यमुच्छ्रायपददायिनः।
सुमेधसां ब्राह्मणानां विदुषामपि नित्यशः।।१५८।।
धर्मरक्षाकराश्चैव यागरक्षाकरास्तथा।
आत्मरक्षाकराश्चापि भासन्ते पृथिवीश्वराः।।१५९।।

क्वचित् प्रामादभाजस्ते तदर्थं सचिवादयः।
विप्राद्याश्च विशेषेण तत्त्राणाय च कल्पिताः।।१६०।।
धर्ममूलं समाश्रित्य जीवन्ति पृथिवीश्वराः।
धर्मे नष्टे राजकुलं नश्यत्येव न संशयः।।१६१।।
अतो नृपैर्धर्ममूलं रक्षणीयं प्रयत्नतः।
राजानो दीप्तिमन्तश्च धनदा धनदोपमाः।।१६२।।
अग्रगण्या पालनेषु नृपाला विश्रुता भुवि।
दुःखेऽप्यखिन्नमनसः लाभदा लाभकार्यकाः।।१६३।।
फलं विना न तेषां तु कार्यं सर्वत्र निश्चितम्।
आकौमारकमेतेषामुज्वलानां महीभृताम्।।१६४।।
क्रियास्सर्वाश्श्लाघनीयाः विधिनैवं कृताः किल।
धैर्यमालम्ब्य कार्येषु स्वबुद्धिसचिवाः क्वचित्।।१६५।।
अन्तर्बुद्धिश्च प्रायेण सत्फला महिता नृपाः।
विधेर्वशान्नष्टकार्याश्चेति ते गणिता बुधैः।।१६६।।
प्रकृत्या निपुणास्ते तु सूक्ष्मयुक्त्यालयाः नृपाः।
सहायं मन्त्रिणं कृत्वा पालयन्ति क्षमामिमाम्।।१६७।।
इति ब्रह्मवचः पूर्वं नारदेन श्रुतं मया।
अतस्ते पृथिवीपालाः सम्मान्याःक्षेमसिद्धये।।१६८।।
नानाविधैरुपायैस्तु मान्याः प्रकृतिभिः क्रमात्।
कृत्वा तं साक्षिणं कार्ये सत्कर्मनिरताः प्रजाः।।१६९।।
फलभाजःकीर्तिभाजः शोभन्ते च चिरायुषः।
नृपसम्माननात् देवाः तुष्यन्ति बहुधा दिवि।।१७०।।
उपकारपरा भूपाः वैरिणामपि नित्यशः।
दिक्पालांशसमुद्भूताः त्रिमूर्त्यंशविराजिताः।।१७१।।

लक्ष्यलक्षणवेत्तारो तटस्थाश्च क्वचिन्नृपाः।
रत्नसिह्मासने रत्नमनर्घमिति ते परम्।।१७२।।
सामदानादिभिर्नित्यं सन्नीतिस्थापका भुवि।
चित्ताकर्षणशीलाश्च प्रकृत्या सम्प्रकीर्तिताः।।१७३।।
मृषासत्यपराणां च प्रकृत्या भीतिदा नृपाः।
पञ्चभूतस्वरूपज्ञाः कलाकौशलशालिनः।।१७४।।
लालनीया विशेषेण महिष्यादिभिरन्वहम्।
विजयं प्राप्नुयात् युद्धे विशेषेण महीपतिः।।१७५।।
तं विना सर्वकार्यार्थहानिरेव विनिश्चिता।
आत्मत्राणात् प्रजात्राणात् सुकृतात् युक्तितः क्वचित्।।१७६
विजयं प्राप्य भूपाला राजन्ते पूर्णविक्रमाः।
आलोचना सैन्यबलं युक्तिर्धर्मस्थितिस्तथा।।१७७।।
एवमाद्यास्तथा सर्वे मिलित्वा विजयप्रदाः।
विजयश्रीः परा भार्या नृपाणां परिकीर्तिताः।।१७८।।
परमानन्दधात्री सा महिषीव विनिश्चिता।
विजयश्रीग्रहात्सर्वसुखं किल विनिश्चितम्।।१७९।।
दुर्मतिं दुर्गतिं दुष्टचारित्रं भूरिदोषकम्।
कुनृपं जेतुमिच्छा तु सर्वक्षेमाय निश्चिता।।१८०।।
आदौ भर्त्सनमादिष्टमथवा सामभाषणम्।
एवमादिभिरुच्छङ्कैर्वाक्यैरादिप्रयोजनम्।।१८१।।
व्यतिरिक्तो तदा दण्डः शास्त्रज्ञैः परिकीर्त्यते।
शास्त्रनिर्दिष्टमार्गेण युद्धं वा सामभाषणम्।।१८२।।
हितप्रदं किलादिष्टमन्यथा निन्द्यते जनैः।
रौरवं नरकं प्राप्य तापभाक् पितृभिस्सह।
जयश्रियालिङ्गने तु नानादानादि भूभुजाम्।।१८३।।

## दानादिकथनम्

यशसे परमानन्ददायीनीति मतिर्मम।
देवानां ब्राह्मणानां च गृहदानं विशिष्यते।
गोदानमन्नदानं च वस्त्रदानादिकं तथा।।१८४।।
तटाकारामकलनं महासेतुप्रकल्पनम्।
जयस्तम्भस्थापनं च दीपस्तम्भप्रकल्पनम्।।१८५।।
पुत्रोत्सवे चैवमेव निर्दिष्टं वासवादिभिः।
पट्टाभिषेकसमये तथा परिणयोत्सवे।।१८६।।
एवं कालेषु शुभदेष्वपि कल्प्यमुदीरितम्।
देशोपदेशकलनं गोरक्षादिकमादरात्।।१८७।।

## विरोधिनृपसुत संरक्षणकथनम्

महाफलाय चादिष्टं प्रजानां रक्षणं तथा।
वैरिभूपप्रजाः पाल्याः स्वप्रजा इव भूमिपैः।।१८८।।
दोषस्मरणमेतेषां विफलाय विनिश्चितम्।
खनिः पाल्याः स्वदेशेषु परदेशेषु वा तथा।।१८९।।
तन्नाशे तु महादोषः निश्चितः शास्त्रलोचनैः।
अतः सर्वप्रयत्नेन खनिपालनमीरितम्।।१९०।।
रक्ष्यं सिंहासनं तद्वत् नवरत्नविभूषितम्।
महिष्या पूजितं तद्वत् देवयक्षस्वरूपकम्।।१९१।।
क्लृप्तरक्षं च सामन्तभूमिपैश्च सेवितम्।
ह्रदकुल्यानदीकुल्या तटाकोत्था क्वचित् तथा।।१९२।।

## सस्याभिवृद्धिकथनम्

रक्षणीया विशेषेण नृपैस्सस्यार्थसिद्धये।
अपामागमनं तत्र निर्गमं चापि कारयेत्।।१९३।।
जलाशयं वा साधारं रक्षयेत् युक्तितो नृपः।
गिरिसानौ गिरेःपार्श्वे गिरिमूर्धनि वा क्वचित्।।१९४।।
समभूमौ नदीतीरे सैकतस्रावपूरके।
जलनेत्राणि शास्त्रज्ञैः निर्दिष्टानि मनीषिभिः।।१९५।।

## जलाशयनिर्माणकथनम्

तद्रक्षणं च कथितं महाक्षेमाय भूतले।
जलमेव परं प्राणः प्राणिनामिह निश्चितम्।
सस्यवृद्धिर्जलैरेव शुद्धिश्चापि तथा मतम्।।१९६।।
तद् धातुराद्या सृष्टिर्हि सर्वक्षेमाय निश्चिता।
भूगर्भे सा प्रविष्टा तु ब्रह्मणा हितकारिणा।।१९७।।
क्वचिदूर्ध्वं क्वचिन्नीचैः जलं स्रवति नित्यशः।
भूगर्भमनुसृत्यैवं सैकतादिकमेव च।।१९८।।
शिलास्रावःक्वचिद्दृष्टः रसस्तु विविधो मतः।
पञ्चानामपि भूतानामेवमेव स्थितिक्रमः।
इति निश्चित्य भूपालः प्रजानां हितकृद्भवेत्।।१९९।।
सस्यवृद्धिकराणाञ्च धनवृद्धिकृतामपि।
हितकृद्भूपतिर्लोके गीयते श्लाघनादरम्।।२००।।

## अन्नस्य महत्त्वकथनम्

अन्नं ब्रह्म समादिष्टमन्नाज्जीवति मानवः।
अन्नेनैव हवींषि द्राक् कल्प्यन्ते देवतुष्टये।।२०१।।
तत् सस्याधीनमादिष्टं तस्याधारस्तु पार्थिवः।
अतस्सर्वप्रयत्नेन नृपेण नयचक्षुषा।।२०२।।
सस्यवृद्धिः सस्यरक्षा प्राणिरक्षा च भूतले।
कार्येति नियमादुक्तं नारदेन महर्षिणा।।२०३।।
स्मृतिशीला धर्मशीलाः ये च वेदविदो भुवि।
न्यायशीलाश्च सततं संरक्ष्याः पार्थिवैः क्रमात्।।२०४।।
बाणप्रयोगे चतुरो मृगयाचतुरश्च यः।
शास्त्रे समर्थश्च नृपः कलासु प्राप्तकौशलः।।२०५।।
नानानिर्माणजालानां स्वरूपज्ञश्च यो भुवि।
दयालुस्सत्यशीलश्च धार्मिकस्सत्यविक्रमः।।२०६।।
स एव राजा सम्मान्यः प्रजारक्षाधुरन्धरः।
पुण्यतीर्थरतो यश्च यश्च दानकलारतः।।२०७।।
पृथिवीपालने दक्षो यश्च सत्कुलजन्मवान्।
स एव राजा सम्मान्यः प्रजाहितकरोद्यमः।।२०८।।
ये च पूज्याश्च ऋषयः पितरो मातरश्च याः।
गुरुःपुरोहितो वापि ब्राह्मणा वेदपारगाः।।२०९।।
कुलदेवेषु चान्येषु भक्तिबद्धा नृपोत्तमाः।
त एव मान्यशीलाश्च कीर्तिताः पृथिवीतले।।२१०।।
अतीन्द्रियज्ञानबलः सर्वैश्वर्यनिवासभूः।
नानाविधप्रमाणज्ञो लक्ष्यलक्षणपण्डितः।।२११।।

तमोहीनस्सत्वगुणः प्रकृतिक्षोभवर्जितः।
प्रत्यक्षगोचरःकाले निर्दिष्टो विजितेन्द्रियः।।२१२।।
प्राकृतक्रियया मुक्तस्त्वविज्ञेयार्थकोविदः।
समग्रशक्तिसम्पन्नः सर्वभूभारधारणे।।२१३।।
स्वकार्येषु समर्थश्च मृदुभाषी स्मितराननः।
व्यञ्जयन्नप्रकाशार्थकार्याणि कलयन्नृपः।।२१४।।
स एव सार्वभौमाख्यपदवीं वोढुमर्हति।
तत्तत्कार्यावसानेषु फलज्ञःफलतत्परः।।२१५।।
फलप्रदाता तद्भोक्ता स एव नृपवल्लभः।
कर्मायत्तस्वरूपोऽपि लोभमोहादिदूरगः।।२१६।।
अन्तर्निलीनःकार्यज्ञः क्वचिदेत्यबहिःस्थले।
मन्त्र्यादिभिर्युतो वापि तत्तत्कार्यस्वरूपतः।।२१७।।
समयज्ञो विधिज्ञश्च भवितव्यो नराधिपः।
पूर्व कृतयुगे पश्चात् द्वापरे च तथा नृपाः।।२१८।।
आसन्सद्गुणसम्पन्नाः बहवःसूर्यवंशजाः।
तथा सोमकुलोत्पन्नाःबुधाढ्याः पुण्यराशयः।।२१९।।
प्रकृतिक्षेमकार्याश्च मानिता त्रिदशैर्दिवि।
अकार्यफलवेत्ता च तद्रतानाञ्च दण्डकः।।२२०।।
अकुण्ठितगतिर्भूपः पूज्यते सर्वतो मुखः।
कार्यदर्शी कार्यसाक्षी कार्यज्ञः फलकृत्तथा।।२२१।।
एवं विधगुणोपेतः स एव नृपवल्लभः।
सकलप्राणिचित्तानां रञ्जको राजवल्लभः।।२२२।।
पुरावृत्तरहस्यज्ञः परमात्मनि भक्तिभाक्।
परिच्छेत्तुमशक्यश्च साधूनां वन्दने रतः।।२२३।।
तुष्टस्सर्वहितो भूपः समर्थःकृच्छ्रसाध्यवित्।

प्रजापालनदक्षश्च सूक्ष्मदर्शी दृढव्रतः।।२२४।।
स एव नृपतिर्लोके मान्यते सर्वदिक्ष्वपि।
दैवमानुषकार्यार्थं कालज्ञः कालरक्षकः।।२२५।।
पक्षवत्सरकार्याणामपि वेत्ता महीपतिः।
उपायेन क्रियाकारी सामाद्यैश्च विशेषतः।।२२६।।
बलवान् शक्तिसम्पन्नःपरिसङ्ख्यादि मानवित्।
पौरजानां रोगशमनकार्यकारी च पार्थिवः।।२२७।।
तथा कारयिता पुण्यकार्याणां सन्नतं नृपः।
सत्यरूपो धर्मरूपः काले काले विशेषतः।।२२८।।
चौर्यादिदुष्टकार्याणामत्ययं तु निरोधकः।
चतुष्पात् धर्मसन्त्राता ज्ञानयज्ञतपो बलः।।२२९।।
मायानिरोधकश्चापि स्वयं मायाविवर्जितः।
धनविद्यागर्वदूरचारी सत्यपराक्रमः।।२३०।।
नृपतिस्सर्वलोकेषु गीयते त्रिदशैरपि।
आगमादिप्रमाणानां रक्षकः कालयोगवित्।।२३१।।
यथोक्ततत्कर्मजालमुपकारयिता नृपः।
यशस्वी मधुराभाषी धर्मत्राता महीतले।।२३२।।
काले महाद्युतिर्भूपश्चोपश्रान्तक्रियाफलः।
गुणानां रक्षकश्चापि शिष्याणामपि रक्षकः।।२३३।।
अध्यापनादिकार्याणां व्यवस्थाकृच्च भूपतिः।
पृथिवीं पालयन्नित्यं निस्पृहस्साधुसेवकः।।२३४।।
स्वस्तिप्रसारणं कुर्वन् कारयन्नपि दिक्षु च।
यशस्यकर्मरक्षायां दत्तदृष्टिःप्रतापवान्।।२३५।।

आयुष्यकर्मकृच्चैषः सर्वदेवांशभासुरः।
तथा कारयिता विप्रैः यागादीनाञ्च कर्मणाम्।।२३६।।
कालज्ञो धर्मतत्त्वज्ञः ब्रह्मवित् ब्रह्मणि स्थिरः।
एवं विधगुणोपेतो नृप एव नृपोत्तमः।।२३७।।

## करग्रहणकथनम्

रक्षन्निमां मेदिनीन्तु करग्राही स्वयं नृपः।
रक्षार्थं तञ्च संरक्षेत् अन्यथा विफलाय तत्।।२३८।।
करग्रहणमादिष्टं धर्मत्राणाय सूरिभिः।
अतःकाले गृहीतन्तु तद्धनं रक्षयेन्नृपः।।२३९।।

## आयव्ययकथनम्

धीरैरायुधजालैश्च स्वजनैस्सचिवादिभिः।
आयव्ययक्रियादक्षैः गणाध्यक्षादिभिस्तथा।।२४०।।
वेदविद्भिः ब्राह्मणैस्तु काले काले यदुच्यते।
तन्माननीयं भूपालैः स्वयमालोच्य मन्त्रिभिः।।२४१।।
ब्राह्मणाःक्षत्रिया लोके धर्मत्राणाय दीक्षिताः।
लोकानान्तु स्थितिर्धर्मात् जायते हि युगे युगे।।२४२।।

## आचारस्य महत्वं तद्रक्षणञ्च

आचारःपरमो धर्मः स तु विप्रैस्तु रक्ष्यते।
आचाराद्धर्मवृद्धिश्च शास्त्रज्ञैश्च विनिश्चिता।।२४३।।

तमेव चिन्तयन् काले कर्म कुर्यान्महीपतिः।
निषिद्धं कर्म कुर्वीत न जात्त्वपि हितप्रदम्।।२६८।।
शास्त्रोक्तकर्म कुर्वन् सन् तेजःकीर्तिमवाप्नुयात्।
स्वर्वासमपि सम्प्राप्य मोदते त्रिदशैस्सह।।२६९।।
यथासङ्कल्पमात्रेण न्यायधर्मादिकं भुवि।
नित्यप्रचारं भवति तथा कुर्यादतन्द्रितः।।२७०।।
सद्वृत्तयस्साधुसेवाः प्रजास्सर्वत्र सर्वथा।
यथा भवन्ति भूपालास्तथा तान् पालयेत्क्रमात्।।२७१।।
कृतवाञ्छापूरणाश्च भवितव्या नराधिपाः।
सचिवाद्यैर्यदादिष्टं स्वयमालोच्य तत्वतः।।२७२।।
विज्ञाप्य ब्राह्मणान् सर्वान् विदुषो वेदपारगान्।
सभायां वा रहस्थाने तत्तत्कार्यानुकूलतः।।२७३।।
तत्तत्कार्यं प्रकुर्वस्तु लभते हि महाफलम्।
धर्मप्रमाणवेद्यानामर्थान् सर्वत्र बोधयेत्।।२७४।।
राज्याङ्गे नीतिमान् राजा प्रकृतीनां हितप्रदम्।
देशाचारवशात् ते तु विविधाःपरिकीर्तिताः।।२७५।।
विधिं सर्वत्र कार्येषु राज्याङ्गेषु महीपतिः।
कुर्यात् क्वचित् कारयेद्वा ब्राह्मणैस्सचिवैस्तथा।।२७६।।
वृद्धैश्च प्रासादवासैः पौरैश्चापि क्वचित्स्थले।
यथाक्रमं समालोच्य प्रकृतीनां हितप्रदम्।।२७७।।

## गवादिपालनकथनम्

देवरक्षणकार्येषु प्रजारक्षणकर्मणि।
पुरपालनकार्येषु वनपालनकर्मणि।।२७८।।

तटाकसेतुग्रामादिपालने गिरिपालने।
गवां च पालने सस्यक्षेत्राणामपि पालने।।२७९।।
विद्याप्रचारकार्येषु तथारोग्यक्रियास्वपि।
करग्रहणकार्येषु तथादानक्रियास्वपि।।२८०।।
युक्तिप्रवचने दण्डे कल्पनानां प्रकल्पने।
वाक्पारुष्ये द्रव्यमुखप्राप्तिकार्ये नृणां तथा।।२८१।।
वैवाहिकेषु कार्येषु तथा स्मृत्युदितेष्वपि।
वर्णाश्रमाणां कार्येषु वञ्चनाक्रोधकर्मसु।।२८२।।
पापकार्येष्वपि तथा नानारूपेषु नित्यशः।
क्रयविक्रयकार्यादिस्थापने धर्मरक्षणे।।२८३।।
एवं विधेषु कार्येषु नानारूपेषु भूपतिः।
विधिं विना क्रियाणान्तु वैफल्यं दृश्यते भुवि।।२८४।।
शास्त्रेषु परिगीतं च नारदश्चाब्रवीन्मुनिः।
तस्मात् सर्वत्र भूपालो नयचक्षुःप्रतापवान्।।२८५।।
विधिं नानामुखं सद्भिः क्रमादङ्गीकृतञ्च यत्।
पूर्वाचारवशात् भूमौ यथाकालं प्रचारयेत्।।२८६।।
कोशेषु तत् रक्षयेच्च पाठयेत् वाचयेदपि।
स्मितपूर्वाभिलाषी हि विधिकारी वशी नृपः।।२८७।।
व्यवस्थाकृत् क्रमकरः शोभते राज्यकर्मसु।
असूयादिविनिर्मुक्तैःप्रियवादिभिरन्वहम्।।२८८।।
सहवासं पङ्क्तिसेवां भोजनादिकमाचरन्।
नृप एवं वदान्यश्च शोभते राज्यकर्मसु।।२८९।।
सर्वज्ञानमयं देवं चिन्तयन् राज्यकर्मणि।
सद्वृत्तिसाह्यो भूपालः पालयेत् क्षेमसिद्धये।।२९०।।

पर्यालोच्य क्रमकरः धर्माचारवशादिह।
ब्राह्मणो भूपतिश्चैव शोभते धर्मरक्षणे।।२९१।।
एतान्विना तु राज्याङ्गं सम्पूर्णबलभागपि।
ध्रुवं न स्थिरतां याति निश्चितं च महर्षिभिः।।२९२।।
अराजकप्रवृत्तिश्च तस्मात् सम्पच्च नश्यति।
यस्मिन्न ब्राह्मणाचारः न क्षात्रपरिरक्षणम्।।२९३।।
तं देशमचिराद्वैरी प्राप्य वा पीडयेत् क्वचित्।
अतो देवांशसञ्जातः क्षत्रिया नित्यवर्चसः।।२९४।।
विज्ञाप्य ब्राह्मणान् सर्वान् विदुषो वेदपारगान्।
सेनेशामात्यसहितः धर्मरक्षां प्रकल्पयेत्।।२९५।।
दोषारोपो दोषबुद्धिः तदाज्ञोल्लङ्घनं तथा।
सभायां यदि निर्दिष्टं स बहिष्कार्य एव च।।२९६।।
अथवा तीक्ष्णदण्डस्स्यात् नारदो मुनिरब्रवीत्।
वस्वंशो देवतांशो वा त्रिमूर्त्यंशोऽथवा नृपः।।२९७।।
सर्वतेजोमयो वापि धर्मदेवस्वरूपकः।
रक्षादेवोऽथवा देही महेन्द्रो वापरो भुवि।।२९८।।
क्षमादेवो दण्डदेवः नीतिदेवः शरीरभाक्।
तेजोनिधिः प्रभावान्वेत्येवं सदसि भूपतिः।।२९९।।
मनांसि लोचनान्येवमाकर्षन् भाति नित्यशः।
धनलक्ष्मीर्धान्यलक्ष्मीः जयश्रीरपि पार्थिवम्।।३००।।
सम्परिष्वज्य मोदन्ते महिषी च पतिव्रता।
नृपस्तु मन्मथाकारः सर्वतेजोनिधिस्स्वयम्।।३०१।।
निर्भीकः पापभीरुश्च नृपः पूर्णपराक्रमः।
धर्मसिद्ध्यर्थकार्यश्च राजा राजति भूतले।।३०२।।

शान्ताग्निवत् क्वचित् भाति काले प्राप्ते बलान्वितः।
निखिलं शतृपक्षं च दहत्येव महीपतिः।।३०३।।
बाल्येऽपि सूक्ष्मधी राजा कदाचिन्नाभिभूयते।
तुमुलेऽपि भये भूपो धैर्यमालम्ब्य शक्तिभाक्।।३०४।।
तन्निवारणकर्तासौ प्रकृतीनां हितप्रदः।
कार्यकालेषु निर्भीकः सान्त्ववाक् मधुरस्मितः।।३०५।।
देशकालविदेवायं द्रव्याणामपि तत्ववित्।
धर्मसिद्ध्यर्मेवास्य सर्वकार्याणि भूतले।।३०६।।
दण्डकृन्नीतिकृत् भूपः सम्पूर्णबलशोभितः।
रक्षिता प्राणिवर्गस्य राजते सूर्यवत् सदा।।३०७।।
रक्षको धर्ममार्गस्य नीतिमार्गस्य भूपतिः।
दुष्टानां दण्डनोद्युक्तः श्रीकामी पूर्णपौरुषः।।३०८।।
शत्रुं मित्रमुदासीनं गुणिनं वा गुणोज्झितम्।
सम्यक् निश्चित्य मनसा क्रियाभिः साक्षिपूर्वकम्।
तत्तत्क्रियारतो भूपः शोभते नितरां भुवि।।३०९।।
उचितं कर्म कुर्वन् सन् राज्याङ्गेषु महीपतिः।
धर्मकृत् धर्मगोप्ता च भवेत्तेजोबलान्वितः।
अन्यथा सर्ववर्णानां साङ्कर्यं वा महाभयम्।।३१०।।
क्षोभश्च द्रव्यनाशश्च भवत्येव न संशयः।
अत एव महीपालः सावधानः प्रमाणकृत्।।३११।।
पुंसां स्त्रीणामपि तथा व्यवस्थाकृद्भवेन्नृपः।
शास्त्राभ्यासः क्वचित् कल्प्यः शास्त्राभ्यासःक्वचित्तथा।।३१२।।
सर्वं नेतृवशात्कार्यं ज्ञेयं तत्र महीभृता।
मोहादिस्तु यथा तत्र न भवेत्तु तथा नृपः।।३१३।।

कुर्याद्वा कारयेद्दक्षैः धर्मत्राणपरो नृपः।
अकालदण्डो न तथा कार्य इत्येव निश्चितः।।३१४।।
परोपकारिताशक्तिं क्रमाद्देशे प्रचारयेत्।
अकार्यचिन्तनं सर्वप्रकृतीनां भयप्रदम्।।३१५।।
नृप एवं गुणोपेतो देवराडिव राजते।
सत्यधर्मपरो यत्र राजा वसति नित्यशः।।३१६।।
राजन्वती तु सा भूमिः तस्यां वर्षति देवराट्।
दण्डेन सान्त्ववाक्येन यथान्यायप्रवर्तकः।।३१७।।
स एव राजा सम्मान्यः सर्वप्रकृतिरञ्जकः।
सतामपि सदाचारः शोभते दण्डशङ्कया।।३१८।।
दिशासु दिक्कोणतलेष्वपि सत्यप्रचारणम्।
क्षेमोपपन्ना प्रकृतिः नृपाज्ञावशतो भुवि।।३१९।।
नीचानां प्राभवं नैव शास्त्रेषु परिकीर्तितम्।
पुंसां स्त्रीणाञ्च वर्णानामाश्रमाणां तथा भुवि।।३२०।।
स्नाने जपे च नैवेद्ये भुक्तौ ताम्बूलचर्वणे।
वस्त्रसन्धारणे चैव तथाभरणधारणे।।३२१।।
विवाहेषु विहारेषु धनकार्यादिषु क्रमात्।
निःसन्देहव्यवस्थाकृत् भूपतिश्शोभते भृशम्।।३२२।।
प्रबलैर्दुर्बलानान्तु यथा पीडा न जायते।
तथा व्यवस्थाकृद्भूपः शोभते नितरां भुवि।
प्रजानामनुरागन्तु वर्धयेत् विविधैःक्रमैः।।३२३।।
स एव राजा नितरां शोभते धर्मसिद्धये।
अविचार्य क्रियाकारी निन्द्यते सर्वथा नृपः।।३२४।।
तस्मादालोचनं पूर्वं बहुरूपं प्रकीर्तितम्।

साधयेत्तस्यभूपालो ब्राह्मणैस्सचिवैस्तथा।।
तैर्विना तस्य सिद्धिस्तु नैव जायेत भूतले।।३२५।।

## प्रजाशानुगुणं विद्याव्यवस्थाकार्येति कथनम्

विनाशयन्ति दुष्टास्तु साधून् धर्मांश्च सर्वतः।
स्वविद्यां परविद्यां वा विदित्वा तत्वतो नृपः।।३२६।।
तथा भाषार्थविज्ञानं प्रकृतीनां सुखप्रदम्।
प्रत्यब्धं षाण्मासिकं वा व्यवस्थाकृद्भवेन्नृपः।।३२७।।
शास्त्रानुसारेण तथा देशाचारवशात्तु वा।
प्रजाशापूरणं कुर्वन् उपायैर्विविधैर्नृपः।।३२८।।
तेजस्वी च यशस्वी च शोभते मङ्गलास्पदम्।
स्वामित्वं च तथा स्वं च प्रकृतीनां सुखं तथा।।३२९।।
धर्माचरणकार्यादि तत्सर्वं पालयेन्नृपः।
अकालकरणं यस्य दोषदुष्टं तथैव च।।३३०।।
स्वयं निरीक्ष्य वा भूपैः सचिवाद्यैरथापि वा।
यथावत्कलनं कार्यमिति देवानुशासनम्।।३३१।।
अन्यथा विफलं कार्यमकीर्तिर्नाश एव च।
चोरादीनां प्रवृत्तिश्च खण्डयेत् युक्तितो नृपः।।३३२।।
धर्मस्थापनकार्यन्तु बहुरूपं किलोदितम्।
अतस्सर्वस्य लोकस्य हितकृत् सर्वथा नृपः।।३३३।।
सर्वभूपालमकुटीमणिनीराजिताङ्घ्रितः।
चिरं भुङ्क्ते क्षमामेनां पयोधिरशनोज्ज्वलम्।।३३४।।

न तस्य शत्रुवार्ता च भीतिर्वा क्षोभणादिकम्।
तिर्यञ्चोऽपि प्रकुर्वन्ति तस्य साह्यं स्वशक्तितः।।३३५।।
दिवि देवप्रसादादीन् अवाप्य किल मोदते।
आत्मानं सन्ततं रक्षेत् दुर्गं राष्ट्रं तथा बलम्।।३३६।।
प्रकृतीनां सुखं तद्वत् सत्यं धर्मञ्च शाश्वतम्।
कोपं लोभं मदं मोहं सुन्दरीणां विलासकम्।।३३७।।
जित्वा तु प्रसभं राजा नित्यं वृद्धोपसेवकः।
प्रासादे च सभायां च ग्रामेषु नगरेष्वपि।।३३८।।

## सचिवादिनियमनविषयकथनम्

यत्कार्यं तञ्च विज्ञात्वा यथावत् कार्यकृद्भवेत्।
सचिवान् प्राड्विवाकांश्च नीतिज्ञान् विदुषस्तथा।।३३९।।
कार्यक्रमविदश्चैवं ब्राह्मणान् वा विशेषतः।
दान्तान् दुर्गुणहीनांश्च गुणाढ्यान् सूक्ष्मबुद्धिकान्।।३४०।।
प्रमाणज्ञांश्च गणनाविदो विदितभाषकान्।
नानाविधेषु शास्त्रेषु निपुणांश्च तथैव च।।३४१।।
दयालून् शान्तचित्तांश्च राजविश्वासशालिनः।
कुलक्रमागतान् वापि निर्दिष्टान् निपुणान् तथा।।३४२।।
बाल्यविद्यान् शुचीन् दक्षान् कुलीनान् सत्यवादिनः।
डम्भासूयादिरहितान् निर्भीतान् साधुसेविनः।।३४३।।
अप्रमत्तान् तत्वविदो मूलज्ञांश्च विशेषतः।
प्रजारञ्जनकार्येषु निरतान् भूपतेस्तथा।।३४४।।

चित्ततुष्टिकरान् कीर्त्यापादकान् धर्मरक्षकान्।
एवं विधान् लेखकादीन् स्थानेषु बहुरूपिषु।।३४५।।
स्थापयित्वा महाप्राज्ञः सार्वभौमो महीपतिः।
क्षमते मेदिनीं भोक्तुं शतं वर्षसहस्रकम्।।३४६।।
वश्यानि सर्वभूतानि तस्य राज्ञो नयस्थितेः।
आयुर्यशश्च धर्मश्च वर्धते नात्र संशयः।।३४७।।

## सेनायामधिनेतृनियमनविषयकथनम्

वाहिनीशान् दुर्गरक्षान् पौररक्षाकरांस्तथा।
नद्यद्रिवनरक्षांश्च गोपालान् देशरक्षकान्।।३४८।।
अपि दण्डकरानेवमश्ववारणरक्षकान्।
खरोष्ट्ररक्षान् मृगयाकोविदांश्च क्वचित्स्थले।।३४९।।
पक्षिरक्षकरान् द्यूतसमर्थान् मल्लयुद्धकान्।
इन्द्रजालविदोऽप्येवं नाट्यनाटककोविदान्।।३५०।।

## कलाज्ञनियमनविषयकथनम्

वाद्यकारान् चित्रकारान् माल्यकारान् तथैव च।
स्थपतीन् वेदविदुषो मानज्ञानपि भृत्यकान्।।३५१।।
स्वर्णकारान् लोहकारान् ककशांश्च सुधाकरान्।
शिलातक्षकवर्गांश्च दारुतक्षानथापि वा।।३५२।।
सेतुनिर्माणकुशलान् उद्यानस्थापने रतान्।
गृहप्रासादभवनग्रामपत्तननिर्मितौ।।३५३।।

समर्थान् शिल्पशास्त्रज्ञान् कूपादौ निपुणांस्तथा।
कुलालांबष्टरजकरथिकप्रमुखानपि।।३५४।।
कृषीवलान् क्षेत्रपालान् कार्यज्ञान् धर्मतत्परान्।
तत्र तत्र स्थापयित्वा राज्याङ्गेषु विशेषतः।
धर्मं कार्तयुगं राजा वर्धयेत् पालयेदपि।।३५५।।
एतैर्विना न राज्याङ्गं शोभते सर्वशक्तिमत्।
आकरज्ञान् वाहकरान् तक्षकान् युक्तिवादकान्।
योगासक्तांश्च देशेषु भूपतिस्सर्वतत्त्ववित्।।३५६।।
परिव्राजकवर्यांश्च गुरूनार्यकुलोद्भवान्।
मठदेवालयाध्यक्षान् शास्त्रसक्तान् यथाक्रमः।।३५७।।
तत्र तत्र स्थापयित्वा शोभते पार्थिवो भुवि।
आपत्काले रक्षकांश्च विनीतान् युक्तिशालिनः।।३५८।।
सुगुणान् स्वात्मरक्षार्थमादिशेत् पृथिवीपतिः।
अन्तःपुरं कोशगृहं रत्नसिंहासनं तथा।।३५९।।
यत्नतो रक्ष्यमादिष्टं शास्त्रज्ञैर्विबुधोत्तमैः
तेनैव वर्धते भूपकुलमक्षय्यसन्ततिः।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये च कृषीवलाः।।३६०।।
ये च व्याधाःपुलिन्दाश्च किराता वनचारिणः।
ते सर्वेऽपि महीपालप्रकृतिस्त्विति देवराट्।
पूर्वमाज्ञापयामास ते पाल्याश्चेति भूतले।।३६१।।
अतस्सर्वप्रजानाञ्च पत्रिणाञ्च महीपतिः।
अन्येषामपि सत्वानां नायकःपरिकीर्तितः।
नद्यद्रिवनवारासिभूम्यादीनामपि प्रभुः।।३६२।।

तस्माद्देवांशसम्भूतः नृपतिश्शास्त्रपारगः।
नित्यं तद्रक्षणे क्लृप्तसङ्कल्पो नीतिलोचनः।।३६३।।
भवितव्यो राजकुलदीपको मान्यते हि सः।
हरिर्हरश्च ब्रह्मा च वासवो दिविदेवताः।।३६४।।
सर्वे रक्षन्ति भूपालं कार्यस्थं वा प्रसुप्तकम्।
मृगयासक्तमपि वा सर्वतो दिक्षु चादरात्।।३६५।।
आशीश्चोक्त्वा पालयन्ति त्रिसन्ध्यादिषु च क्रमात्।
तस्मादमितशक्तिस्तु भूपालो देवतांशकः।।३६६।।
स्वयमप्यात्मरक्षार्थी सत्यधर्मपरायणः।
कामात् क्रोधात् दुष्टकार्यात् भवितव्यो नराधिपः।।३६७।।
इन्द्रियाणां जये यत्नः कार्यःप्रत्यहमादरात्।
तद्विना नृपराज्याङ्गं क्रमशो हीयते किल।।३६८।।
जितेन्द्रियो महीपालः प्रकृतीस्सत्त्ववर्त्तिनीः।
क्षमते च स्थापयितुं स्वयं निष्कल्मषस्तथा।।३६९।।
कामकार्यं क्रोधकार्यं जित्वा भूपतिरन्वहम्।
तदुत्थव्यसनादीनां दूरगो भवति प्रभुः।।३७०।।
कामादिकार्यसंयुक्तःक्षीयते निन्द्यते किल।
सत्सेवासाधुचरितं स्वात्मरक्षा च नित्यशः।।३७१।।
धर्मशास्त्रानुसारेण प्रजानां पालनं तथा।
सचिवादिसमोपेतो यःकुर्वन् नीतिमान् नृपः।।३७२।।
त्रिदशा अपि तं द्रष्टुमायान्ति सुरलोकतः।
कार्यानुगुणसाह्यञ्च सम्प्राप्य पृथिवीपतिः।।३७३।।
राज्याङ्गं बहुरूपं तु पालयेत् यत्नतस्तदा।
ब्राह्मणान् वेदनीतिज्ञान् सचिवान् युक्तिदायिनः।।३७४।।

मानयित्वा तदालोच्य तैस्साकं रहसि क्षमी।
जयश्रीधनगुप्त्यादिसारकार्यकरो भवेत्।।३७५।।
स एव राजते राजा राजराजसमो भुवि।
रथानां वारणानाञ्च तुरगाणामनेकधा।।३७६।।
वीराणाञ्च भटानाञ्च तथोष्ट्रखरसन्ततेः।
नानायुधानां रक्षासु प्रत्यहं पृथिवीपतिः।।३७७।।
सेनापतीन् समर्थांस्तु स्थापयित्वा विशेषतः।
स्वयं निरीक्ष्य वा काले तत् बलं वर्धयेत् क्रमात्।।३७८।।
बलेन वर्धते राजा प्राप्नोति च जयश्रियम्।
बलात् भयनिवृत्तिस्तु सर्वथा जायते किल।।३७९।।

## बलमूलमेव राज्याङ्गमिति कथनम्

बलमूलं हि राज्याङ्गं तस्मात् तद्रक्षणे प्रभुः।
चिन्तयेत् ब्राह्मणैस्साकममात्यादिभिरादरात्।।३८०।।
भिन्नानामपि चार्थानां हितमालोच्य भूपतिः।
राज्याङ्गे हितकृत्काले माननीयो विशेषतः।।३८१।।
अमात्यानां गुरूणाञ्च ब्राह्मणानामपि क्वचित्।
पौराणामपि भावञ्च ज्ञात्वा ज्ञानी यथार्थवित्।।३८२।।
हितकृन्राजते राजा सर्वलोकैकवन्दितः।
नानाशास्त्रार्थतत्वज्ञमिङ्गितज्ञं विशारदम्।।३८३।।

## दूतनियमने नियमकथनम्

शुचिं जितेन्द्रियं दूतं दूतान् वा स्थापयेन्नृपः।
जातु दूतैःकार्यजालं सफलं भाति भूतले।।३८४।।
दूतैर्विना न तत्सिद्धिः भेदादिश्च प्रजायते।
सन्धिकर्मणि दूतस्तु समरे वा क्वचित्स्थले।।३८५।।
तत्वज्ञः स्मृतिमान् धीमान् कार्यकृत्फलदायकः।
दूते दुष्टे तु विफलं कार्यजालं सुनिश्चितम्।।३८६।।
तटस्थाः ब्राह्मणाश्श्लाघ्याः प्रजानृपतिलाभदाः।
धर्मत्राणपरा भान्ति सर्वकार्येषु भूपतेः।।३८७।।
विवादे वेदशास्त्रे च जपहोमादि कर्मसु।
पुरावृत्ते तथाकार्येष्वपि नानाविधेषु च।।३८८।।

## अन्तःपुरेषु रक्षणनियमकथनम्

तटस्था एव नीतिज्ञाःकथिताःकार्यसाधकाः।
अन्तःपुरे च प्रासादे भवने नित्यवासके।।३८९।।
भृत्यान् सद्गुणसम्पन्नान् स्थापयेत् पृथिवीपतिः।
येन प्रासादरक्षा च रहस्यादिकमप्यथ।।३९०।।
महिषाद्याश्चेटिकाश्च संरक्ष्यन्ते यथाक्रमम्।
तस्माद्दूतान् तटस्थान् वा भृत्यान् वा किङ्करानपि।।३९१।।
आत्मरक्षाकरान् योधान् शुद्धान्तादौ च रक्षकान्।
परीक्ष्य विविधोपायैः सद्गुणान् स्थापयेन्नृपः।।३९२।।

अन्तःपुरेषु चेटीश्च गुणाढ्याःप्रीतिशालिनीः।
स्थापयन् शोभते राजा चान्यथा विफलक्रियः।।३९३।।
पापान्यपशयः प्राप्य क्षीयते पृथिवीतले।
अतस्सर्वैरुपायैश्च गुणाढ्यान् चिरसेविनः।।३९४।।
राज्याङ्गेषु नृपो धीमान् स्थापयन् फलभाग्भवेत्।
प्रतिपक्षनृपास्सर्वे ये चान्ये भुवि शत्रवः।
तेषां यथा न रन्ध्रादिवीक्षणं तु भवेन्नृपः।।३९५।।
तथा परिजनान् सर्वान् परीक्ष्य स्थापयेत् बुधः।
तेनैश्वर्यं महानन्दमवाप्नोति प्रयोगवित्।
सर्वकार्याण्यप्रमत्तः कुर्वीत नृपतिःक्रमात्।।३९६।।
तेनैव कीर्तिमतुलां भजन् सुखमवाप्नुयात्।
यानेन यायान्नृपतिः प्रसादादेव मन्दिरम्।।३९७।।
गुरोराश्रमभूमिञ्च विनान्यत्र क्रमो मतः।
यानानि रत्नाभरणान्यन्यानि च यथाक्रमम्।।३९८।।
स्थलकालोचितं स्वीयशक्त्या कलितमुत्तमम्।
आदायाप्तैर्मन्त्रिभिर्वा समन्ताद्रक्षितो व्रजेत्।।३९९।।
उदायुधैश्च सेनाभिः रक्षितो मृगयां चरेत्।
दानशीलो भवेद्राजा यात्राकाले विशेषतः।।४००।।

## दानकरणकालकथनम्

सिंह्मासनप्राप्तिकाले विवाहे विजयेऽपि च।
सर्वदेवार्चनं शस्तं नानादानं यथाक्रमम्।।४०१।।

कलयन् विजयी मान्यः चिरायुरभिवर्धते।
अन्यथा तत्पक्षहानिरिरिति तत्त्वविदो विदुः।।४०२।।
यदादौ किल कर्तव्यं द्वितीयञ्च तृतीयकम्।
इति पौर्वापर्यवशात् कार्यजालानि चिन्तयन्।।४०३।।
कलयन् कारयन् राज्ये तेजस्वी चाभिवर्धते।
अन्यथा तत्कर्मजालं विफलं च भविष्यति।।४०४।।

## समयपरिपालनं मुख्यमिति कथनम्

कालातिक्रमणे दोषः सर्वत्र किल निश्चितः।
विशेषतो दण्डकाले पैत्र्यसिह्मासनक्रमे।।४०५।।
शुद्धान्तसेवाकाले च विजयश्रीपरिग्रहे।
एवमादिषु कालेषु मन्त्रिभिश्चोदितेषु यः।।४०६।।
कालातिक्रमकृत् राजा निष्फलो निन्द्यते बुधैः।
अतस्सर्वप्रयत्नेन यथाकालक्रियान्वितः।।४०७।।
नृपतिश्शोभते राज्ये तारामध्ये शशी यथा।
स्थलकालोचितान्येवमासनान्याश्रयन्नृपः।।४०८।।
मान्यो भवति सर्वत्र क्षात्रं तद्धेतुरीरितः।
उत्तमां मध्यमामन्यामर्हणां सात्त्विके नृपः।।४०९।।
वर्णाश्रमाचारवशात् प्रयुञ्जानो नयेक्षणः।
चिरायुर्वर्धते राज्ये यशः सम्पन्निषेवितः।।४१०।।
वर्णाश्रमक्रियादीनां लङ्घनं निन्द्यते बुधैः।
तत्रौदासीन्यमपि च पापहेतुरिति स्मृतम्।
विशेषतो महीपानामेतल्लक्षणमुच्यते।।४११।।

तद्रक्षाकरणायैव क्षत्रजातिर्हि निर्मिता।
तत्र शक्तिमती सैव सर्वलोकेषु विश्रुता।।४१२।।
अतो वर्णाश्रमप्रोक्तकार्योल्लङ्घनमाचरन्।
निन्द्यो दण्ड्यश्च भवति राजनीतिपरैर्नृपैः।।४१३।।
स्वागतोक्त्यासनाद्यैस्तु मान्या प्रकृतिरीरिताः।
क्वचित् स्वयं वदेत् काले मन्त्रिमुख्यैः क्वचित् स्थले।
नामदेशादिविषयान् विदित्वापि क्वचिन्नृपः।।४१४।।
अन्येभ्यस्तत्पुनर्ज्ञात्वा कर्म कुर्यात् यथोचितम्।
सुखं वा यदि वा दुःखं प्रकृतीनां प्रजायते।।४१५।।
देशकालसमापन्नं तत्र हेतुर्महीपतिः।
ततो महीपतिर्लोके धर्माचरणतत्परः।।४१६।।
यथाकालं यथान्याय्यं तत्कुर्याच्छास्त्रचोदितम्।
तेन संवर्धते लक्ष्मीः यशश्शाश्वतमेव च।।४१७।।
कलितं यत्र शयनं स्नानं पानादिकं तथा।
तत्रैव तन्महीपालः कलयन् वृद्धिभाग्भवेत्।।४१८।।
प्रायेणायं क्रमःप्रोक्तःतत्वविद्भिर्महर्षिभिः।
तथा सल्लापनं सद्भिः विविधं राज्यकर्म च।।४१९।।
निर्दिष्टस्स्थलभाक् तन्वन् यशस्सम्पत्सुखर्धये।
परमां कीर्तिमाप्नोति नानारूपैःप्रधानकैः।।४२०।।

## राज्ञां निषेधविषयकथनम्

राज्यं रक्षन् च बहुधा सामन्तैस्सेवितस्तथा।
द्यूतं वाक्कलहं चैव रसहीनवचस्तथा।।४२१।।

पानं वान्यं महीपालः वनिताभिर्विवर्जयेत्।
अन्यथा तु मतिभ्रंशः तस्मादापत् प्रजायते।। ४२२।।
आत्मानं सन्ततं रक्षेत् वनितासङ्गमादिकात्।
महिर्षी लालयेत्काले भाषणालिङ्गनादिभिः।।४२३।।
विलासिनीनामन्यासां वीक्षणादिभिरन्तरा।
संप्राप्य परमां तुष्टिमात्मरक्षापरो नृपः।।४२४।।
अङ्गानि विविधान्येवमिति प्रोवाच भार्गवः।
यथा जलं पद्मपत्रे तथात्मानं महीपतिः।।४२५।।
निश्चित्य कलयन् काले वशी च सुखभाग्भवेत्।
स एव नृपतिर्लोके वर्धते नात्र संशयः।।४२६।।
वसन्तं ग्रीष्मकालञ्च वर्षाकालादिकं तथा।
सेवेत विधिवत्काले शास्त्रमार्गेण भूपतिः।।४२७।।
देवतानाञ्च सर्वासां प्रसादप्राप्तये क्रमात्।
तेनायुर्वर्धते लक्ष्मीः सुखं च परमं तथा।।४२८।।
अतःकालोत्सवश्शस्तः भूपालानां विशेषतः।
नगरस्य बहिर्वापि क्वचिदन्तस्स्थले तथा।।४२९।।
उद्याने वा शुद्धदेशे तत्सेवेत यथाक्रमम्।
विद्यारम्भे विवाहे च विजयश्रीपरिग्रहे।।४३०।।
सतामामन्त्रणं शस्तं ततस्तत्सेवनादिकम्।
प्रकृतीनां माननं च तथा राजोपसेविनाम्।।४३१।।
सिद्धिस्तु विविधा तेन निश्चिता शास्त्रवेदिभिः।
एतदाप्तोपदेशाच्च देशकालानुकूलतः।।४३२।।
कारयेत् विधिवत्काले तेन कीर्त्यादिकं मतम्।
शास्त्रनिर्दिष्टेन नृपो विधिना तुष्टिभाग्भवेत्।।४३३।।

आप्तोपदेशाच्च तथा मन्त्रिमुख्यैर्विशेषतः।
स्वदेशे च तथान्यत्र यात्राकाले तथा नृपः।।४३४।।
आत्मानं बहुधा रक्षेत् प्रकृतिक्षेमसिद्धये।
इदमेव फलं प्रोक्तं सृष्ट्यादौ परमेष्ठिना।।४३५।।
आपदुद्धरणं काले राज्ञां तु परमा क्रिया।
सतामुपकृतिश्चैव साधुसम्माननं तथा।।४३६।।
जीवरक्षा च हि तथा बहुरूपा प्रकीर्तिता।
एतानि काले नृपतिः निर्दिष्टानि विशेषतः।।४३७।।
स्वयमालोच्य विधिवत् देशकालवशात्तथा।
कुर्वन् वा कारयन् वापि राजते चन्द्रमा इव।।४३८।।
कोशसंरक्षणं काले सेनासंरक्षणं तथा।
दाने सत्पात्रमेवन्तु कार्यन्तु विविधं स्मृतम्।।४३९।।
गुरूपदेशात् युक्त्या च तत्कृत्वा कीर्तिभाग्भवेत्।
स्वात्मकर्मोचितं देहं संरक्षन् पृथिवीपतिः।।४४०।।
शास्त्रचक्षुस्साधुसेवी प्रकृतिःक्षेमकृद्भवेत्।
दण्डयेत् पापकर्माणं कुमार्गाचरणान् तथा।।४४१।।
चोरान् निन्द्यांश्च बहुधा शास्त्रमार्गेण भूपतिः।
तेनैव सिद्धिर्भवति नान्यथा शास्त्रनिश्चिता।।४४२।।
स्वदेशस्थःपरस्थो वा काले सन्ध्यादिकं चरन्।
लभते परमां कीर्तिमायुरारोग्यमेव च।।४४३।।
क्वचित्काले महीपालः तत्वजिज्ञासुरादरात्।
प्रकृतीनां हितार्थी तु छन्ननैजस्वरूपकः।।४४४।।
तं देशं प्राप्य कुतुकी देशाचारीव तत्त्ववित्।
यथान्याय्यं प्रवर्तेत स भवेत् राजपूजितः।।४४५।।

देशनाशो जीवनाशो यथा वा न भवेन्नृपः।
सम्यगालोच्य हि तथा कर्मकुर्यादतन्द्रितः।।४४६।।
सर्वक्षेमकरं कर्म राजोपज्ञं प्रचक्षते।
तेनैव परमं श्रेयः प्रकृतीनां प्रजायते।।४४७।।
अशुभं वर्जयन् कर्म चाबाल्यात् पृथिवीपतिः।
सत्सङ्गसेवी सचिवशास्त्रनेत्रद्वयो वरः।।४४८।।
नीतिमान् रक्षणज्ञश्च शत्रुभिश्चापि पूज्यते।
लेखनं पठनं न्यायस्थापनं जीवरक्षणम्।।४४९।।
यच्चान्यदुक्तं राज्याङ्गे तच्च कुर्वन् यथाक्रमम्।
विद्यामर्थञ्च कनशः प्रजानां क्षेमदत्तदृक्।।४५०।।
स्वीकुर्यात् पृथिवीपालः तत्फलाय प्रकल्पते।
द्यूतञ्च मद्यपानञ्च नृपाणां धीमतामपि।।४५१।।
महानर्थाय भवति दुष्टसङ्गश्च निश्चितः।
अतस्सर्वक्षेमकाङ्क्षी वर्जयेत्तं महीपतिः।।४५२।।
धनिकैर्वा वैश्यवरैः क्षत्रियैर्वा क्वचिन्नृपः।
जनौघैरपि वा श्रेष्ठैः यत्कार्यं कर्म निश्चितम्।।४५३।।
तच्च स्वयुक्त्या बलतो धनेनापि प्रयत्नतः।
तैरेव वा क्षेमसिद्ध्यै कारयेत्तन्त्रतत्त्ववित्।।४५४।।
तन्नामख्यापनं युक्तं महाभाग्याय कल्पते।
असत्कार्यप्रवृत्तानां दण्डनं नृपधर्मतः।।४५५।।
श्लाघ्यमेवेति कथितं भृगुणा हि महर्षिणा।
तस्माद्दण्डं महीपालो यथारीतिं प्रकल्पयेत्।।४५६।।
अतिदण्डस्तीव्रदण्डः द्वाविमौ च विनिन्दितौ।
कुमार्गेण न गन्तव्यमिति प्रोवाच भार्गवः।।४५७।।

करदानैर्वीक्षणैश्च शिरसः कम्पनादिभिः।
भुजास्फाटनतश्चापि यथार्हं कालयोग्यकम्।।४५८।।

## सेनापत्यादीनां सम्मानादिकथनम्

वीरान् सेनापतीनन्यान् मान्यान् सामन्तमुख्यकान्।
सम्मान्य विधिवत् राजा यशोभाक् सर्वसन्नुतः।।४५९।।
सर्वासां प्रकृतीनाञ्च क्षेमदो भवति ध्रुवम्।
निर्दिष्टकालगमनमुखं कार्यं महीपतेः।।४६०।।
सर्वेषां श्रेयसे शस्तं नारदो मुनिरब्रवीत्।
यत्र विश्रान्त्यादिकं तु निश्चितं हि महीपतेः।।४६१।।
तदन्यथा न कर्तव्यं प्रायेण सचिवादिभिः।
नैमित्तिके कारणे तु तद्युक्तं नारदोऽब्रवीत्।। ४६२।।
त्वरितोत्तरदानं तु प्रकृत्या नैव शक्यते।
विवादे सन्धिकाले च गणनादिक्रियास्वपि।। ४६३।।
सम्यगालोच्य वक्तव्यं तदेव श्रेयसे परम्।
अन्तःपुरं कोशगृहं स्वावासस्थलमेव च।। ४६४।।
यच्चान्यत् कथितं रक्ष्यं तद्रक्ष्यं सर्वधा नृपैः।
आप्तैश्च चिरदृष्टैश्च कुलदेशागतैस्तथा।।४६५।।
रहस्यं निर्दिशेत्काले तच्च क्षेमाय निश्चितम्।
एवं बहुभिरालोच्य युक्तं चायुक्तमेव च।।४६६।।
रहः सदसि वा भूपः तत्कुर्यान्मन्त्रिनिश्चितम्।
क्वचित्तु स्वयमालेच्य तत्कार्यमिति च स्मृतम्।।४६७।।

सत्यमेव वदेन्नित्यं नानृतं नाप्रियं क्वचित्।
व्याधिग्रस्तो नृपोऽशक्तः प्रजापालनकर्मणि।।४६८।।
तस्मात् नृपो यत्नतस्तु स्वात्मानं व्याधिवर्जितम्।
सम्रक्षेन्नियतं  नित्यमरीनपि षडुत्तमः।
अतस्तेन जयी लोके पार्थिवस्सर्वपूजितः।।४६९।।
स्वात्मानमिव रक्षेच्च प्रकृतीः सर्वयत्नतः।
व्याधिवर्गाच्च चोराच्च भयादन्यसमुत्थितात्।।४७०।।
महाभाग्यप्रसक्तिस्तु तेन संवर्धते नृणाम्।
ज्ञानं श्रेष्ठबलं प्राहुः तत् प्राप्यं साधुसेवनात्।
ज्ञानेन हीनो नृपतिः निन्द्यते नात्र संशयः।।४७१।।
रसिकैस्सूक्ष्मधीभिश्च मन्त्र्याद्यैस्तच्च वर्धयेत्।
मैत्रीं संवर्धयेत् भूपः सर्वत्र समदृष्टिभाक्।।४७२।।
आपत्काले तु सा मैत्री फलदा निश्चिता परा।
राज्याङ्गस्थैर्यहेतुश्च कीर्तिदा सुखदा तथा।।४७३।।
सेनैव शत्रुविजये दुष्टानां दमने तथा।
शक्तेति निश्चिता लोके भूपस्तां वर्धयेन्नृपः।।४७४।।

## सैन्यरक्षणकथनम्

स्वयञ्च मन्त्रिभिश्चाप्तैः तद्रक्षेत् सैन्यमुत्तमम्।
नानाविधं प्रहरणं यत्प्रयोज्यं रणाङ्गणे।।४७५।।
तत्सर्वं भूपतिर्युक्त्या स्वदेशे तत्र तत्र हि।
स्थापयेदपि रक्षेच्च नानोपायैरतन्द्रितः।।४७६।।

प्रजाबलं सैन्यबलं मित्राणाञ्च बलं तथा।
सर्वत्र स्थापयेत् भूपः वशी सत्यव्रतस्स्वयम्।।४७७।।
यञ्च तुष्टिकरं प्रोक्तं त्रिवर्गफलदं तथा।
तञ्च ज्ञानं बलं नित्यं वर्धयेत् पृथिवीपतिः।।४७८।।
वाञ्छितं पूरयेत् काले सर्वत्र पृथिवीश्वरः।
यथाक्रमं यथान्यायं तञ्च तेजोविवर्धकम्।।४७९।।
शास्त्रविन्नृपतिर्युक्त्या पापभीरुर्दृढव्रतः।
राज्याङ्गबलवृद्ध्यादीन् कल्पयेन्मन्त्रिभिस्स्वयम्।।४८०।।
तेन कीर्तिः शाश्वती हि वर्धते क्षेमसिद्धये।
एकाकी न तु गन्तव्यो विजने च स्थलान्तरे।।४८१।।
विना स्वावासहर्म्यं तु तन्निन्द्यं शास्त्रचोदितम्।
प्रातर्वा नृपतिस्सायं सेनां स्वीयामतन्द्रितः।।४८२।।
निरीक्ष्य लालयेद्वीरान् अश्वादीनपि बुद्धिमान्।
करस्पर्शैर्दृष्टिदानैः मानयेत् जीवतत्त्ववित्।।४८३।।
धनुर्वेदरहस्यञ्च लक्ष्यं चापि शरावलेः।
खड्गधाराप्रसारश्च मल्लयुद्धादिकं तथा।।४८४।।
अन्यत् यत्वीरकृत्यन्तु तत् ज्ञेयं नृपपुङ्गवैः।
सन्ध्ययोरुभयोर्मातृगुरुसेवादिरुत्तमः।।४८५।।
विशेषेण नृपाणां तत् श्रेयसे किल शस्यते।
नाश्नीयान्न स्वपेत्तत्र देवतोपासनक्रिया।।४८६।।
प्रशस्यते श्रेयसे तु विशेषेण महीपतेः।
नियम्येन्द्रियवर्गन्तु देवभक्त्यादिमण्डितः।।४८७।।
कुलधर्मं प्रकुर्वाणः चिरायुरभिवर्धते।
दुर्गं प्रसादमपि च कोशमन्दिरमादरात्।।४८८।।

संरक्षेदिह राज्याङ्गं भूतये भूमिवल्लभः।
साधुसङ्गं च सचिवं साह्यकर्मणि भूपतिः।।४८९।।
सम्प्राप्य वर्धते काले पूर्वपक्ष इवोडुराट्।
प्रस्थप्रमाणं मूल्यञ्च द्रव्याणां विविधात्मनाम्।।४९०।।
निर्दिशेत् क्रमशो भूपः सभायां मन्त्रिभिःक्रमात्।
निवेदयेच्च राज्याङ्गं तत्र तत्र सुखर्धये।।४९१।।
तेन तुष्टाः प्रकृतयः कीर्तिरत्युत्तमा मता।
वक्तुराशयमालोच्य प्राचीनानां विशेषतः।।४९२।।
मन्त्रिभिर्बहुधामन्त्र्य तत्कार्यं सम्प्रकीर्तितम्।
तेनैव परमं सौख्यं नृपाणामिह जायते।।४९३।।
सुधियं सद्गुणं धीरमिङ्गितज्ञं विशेषतः।
सर्वप्रियं देशकालस्वरूपज्ञं महीपतिः।।४९४।।
दूतं च घटकं चैव सचिवं प्राप्य भूतले।
वृद्धिमाप्नोति सततं अन्यथा विफलाय हि।।४९५।।

## गोकुलादिवर्धनकथनम्

गोकुलं श्रोत्रियकुलं तथा गुरुकुलं नृपः।
रक्षन् हि वर्धते राज्यं तन्मूलं हि परं सुखम्।
यदशक्यमिह प्रोक्तं प्रकृतीनां सुखप्रदम्।।४९६।।
तत्साधयेत् स्वयं युक्त्या शास्त्रज्ञो भूमिवल्लभः।
यच्च सौख्यादिजनकं सर्वेषां शुभदं मतम्।।४९७।।
प्रयत्नेनापि तत्कुर्यात् यशोदं सुखदं हि तत्।
यदुच्यते सदसि वा तदालोच्य महीपतिः।।४९८।।

सत्यं वा यदि वासत्यमहितं वा हितं तथा।
यथोचितं कर्म कुर्यात् प्रकृतिक्षेमसिद्धये।।४९९।।
प्रसन्नवदनो भूत्वा सततं पृथिवीपतिः।
राज्याङ्गकार्याणि तथा स्वात्मनः कलयन् भुवि।।५००।।
वशी दान्तो दयालुश्च स्मितभाषी दृढव्रतः।
कीर्तिमान् वृद्धिमाप्नोति सर्वमान्यो महीतले।।५०१।।
फलाफलप्रदान्येव शकुनानि महर्षिभिः।
निर्दिष्टानि महीपालस्तानि तस्मात् यथाक्रमम्।
निरीक्ष्य राज्याङ्गकार्यं स्वात्मनश्च तथा क्रमात्।।५०२।।
कलयन् वृद्धिमाप्नोति नान्यथा फलभाङ्मतः।
विद्यारम्भे विवाहे च जैत्रयात्रादिके तथा।।५०३।।
निरीक्ष्य तानि भूपालःकर्म कुर्वन् प्रशस्यते
अतुलां श्रियमाप्नोति नान्यथा फलभाक् मतः।।५०४।।
यत्नेन गोपयेन्मन्त्रं मन्त्रछेदो भयप्रदः।
मन्त्रसिद्धिं विना लोके कथं नु सुखभाक् भवेत्।।५०५।।
तं मन्त्रं कलयेद्राजा नित्यं मन्त्रिसदस्ययम्।
स्वयमालोच्य युक्तया च देशकालानुरूपकम्।।५०६।।
नयानयगुणार्दीश्च तथा द्रव्यस्वरूपकम्।
स्वकुलाचारयोग्यं च तन्निश्चित्य महीपतिः।।५०७।।
प्रयुञ्जानस्तत्र देशे सुखभाक् कीर्तिभाक् भवेत्।
प्रकृतीनां तथा सौख्यं राज्याङ्गं चाप्यनाकुलम्।।५०८।।
तिष्ठन्ति दूरतो वैरिभूपालाश्चकिता क्रमात्।
अतः संरक्षणं मन्त्रराशीनां परमं हितम्।।५०९।।

कालयोग्यं च कलयेन्नीतिज्ञो भूमिवल्लभः।
दृश्यादृश्यस्वरूपन्तु सम्यगालोच्य भूपतिः।।५१०।।
मन्त्रिभिश्चापि निर्दिष्टं कुलाचारवशात् बुधः।
कर्मकुर्वन् कालयोग्यं यशोभिरभिवर्धते।।५११।।
भयहीनः स्वयं राजा त्रिमूर्त्यशसमुज्ज्वलः।
नैमित्तिकानि नित्यानि कर्माणि विजितेन्द्रियः।।५१२।।
स्वयं कुर्वन् कारयंश्च वर्णाश्रमहिते रतः।
प्रजाभिर्मानितो लोके यशोभिरभिवर्धते।।५१३।।
क्रमोत्तरप्रदातारं वशिनं वाग्मिनं नृपः।
कृत्वा पार्श्वस्थितं धीरं स्मितपूर्वाभिभाषिणम्।।५१४।।
कार्याणि बहुरूपाणि साधयेत् नीतितत्त्ववित्।
आह्वानदानयोग्या ये श्लाघार्हा ये च कीर्तिताः।।५१५।।
तान्मानयेन्महीपालो यथा कालमतन्द्रितः।
हारादिदानतो वापि कालयोग्यक्रियादिभिः।।५१६।.
तैः श्लाघितः कीर्तिभाक् च राजते कुलदीपकः।
अकाले यत्कृतं कार्यं नैव प्राप्नोति तत्फलम्।।५१७।।
अपकीर्तिश्चापि तथा पापादिश्च प्रजायते।
अतः समुचितं कालं बलमुद्वीक्ष्य भूपतिः।।५१८।।
बीजारोपं सेतुबन्धं सतामाराधनं तथा।
कुर्वन् वा कारयन् नित्यं राज्याङ्गं तस्य सुस्थिरम्।।५१९।।
कीर्तिश्च महती काले वर्धते परमं सुखम्।
गुणिनं शान्तचित्तं च तथा न्यायप्रवर्तिनम्।।५२०।।
दयालुं वशिनं काले धर्मज्ञं नीतिकोविदम्।
सन्मार्गगामिनं नित्यं वर्णाश्रमहिते रतम्।।५२१।।

डम्भादिदूरमुक्तञ्च सत्पुत्रं सत्कळत्रकम्।
मान्यवृत्तं महीपालं श्रीरालिङ्गय मुहुर्मुहुः।।५२२।।
तत्संपत्वृद्धिजननी प्रसादो तस्य राजते।
गुणवन्तं जनस्तौति गुणी भवति सिद्धिभाक्।।५२३।।
अतस्तत्वस्वरूपज्ञः कार्यहेतोर्महीपतिः।
स्थापयित्वा गुणभृतो राज्याङ्गे बहुरूपके।।५२४।।
साधयेत् तैस्तु कार्याणि कालयोग्यानि चाज्ञया।
राज्याङ्गं तस्य शुभदमैन्द्रं पदमिवोज्वलम्।।५२५।।
साधका गुणिनो नित्यं राज्ञां विश्रान्ति हेतवः।
बहुरूपाणि राज्याङ्गकार्याणि स्वीयशक्तितः।।५२६।।

## राजसेवकगुणकथनम्

साधयेयुर्महीपालस्याज्ञया चोदिता भृशम्।
राजविश्वासपात्रास्ते ते रक्षाकारिणो मताः।।५२७।।
तैर्विना बहुरूपन्तु राज्याङ्गं नहि सिद्धिभाक्।
पालनं बहुरूपन्तु तैरेव कलयेत्क्वचित्।।५२८।।
तत्र विन्यस्तनयनो यथाकारी भवेन्नृपः।
शुभमार्गेण गच्छन्तः सेवका राजसेवकाः।।५२९।।
शोभन्ते बुहुधा राज्ये राजविश्वासशालिनः।
तैरेवं प्रकृतिक्षेमप्राप्तिश्च किल निश्चिता।।५३०।।
अतः सद्गुणसम्पन्ना राज्यकार्यधुरन्धराः।
माननीया विशेषेण महीपालैर्यथा क्रमम्।।५३१।।

सचिवानां च भूपानां नित्यं शास्त्रनिषेवणम्।
महिषीं युवराजं च सर्वदा तुष्टिकारणम्।।५३२।।
नृपतिःश्लक्ष्णया वाचा करस्पर्शादिभिस्तथा।
दुकूलहारदानाद्यैः लालयेत् क्षेमसिद्धये।.५३३।।
तेनैव राज्याङ्गसिद्धिः प्रजानां क्षेमसन्ततिः।
यशश्च परमं सौख्यं वर्धते नात्र संशयः।।५३४।।
अतो नृपतिभी रक्ष्याः कळत्रं सत्सुतादयः।
प्रत्यहं यत्नतः काले सचिवाद्यैरथ क्वचित्।।५३५।।
कुलक्रमागतैर्वृद्धैः हिततत्वादिदायिभिः।
दुष्टाच्चारिकुलात् रक्ष्यं शठात् दुष्कुलजादपि।।५३६।।.
वञ्चकात् पिशुनादेवं जनात् सद्गुणवर्जितात्।
सन्ततं रक्ष्यमित्येवं कळत्रं च सुतादयः।। ५३७।।
शुद्धान्तचारिभिश्चाप्तैः  कुलीनैः चिरशोधितैः।
राजविश्वासपात्रैश्च तदा क्षेमाय कल्पते।।५३८।।
ब्रह्माणं विष्णुमीशानं वासवादीन् सुरोत्तमान्।
कुलक्रमागतं चापि गुरुं नत्वा महीपतिः।।५३९।।
तत्क्षेमाय प्रार्थयेत्तु तथा विप्रोत्तमानपि।
तान् तोषयित्वा वस्त्राद्यैः काले काले विशेषतः।।५४०।।
तदाशीर्वर्धितश्रीश्च राजते पृथिवीपतिः।
निःसपत्नां महीं कृत्स्नां चिरायुः प्राप्य मोदते।।५४१।।
मुनींश्च तापसान् काले चार्चयेत् भक्तिमण्डितः।
तेषामाशीश्च सम्प्राप्य चिरञ्जीवति भूपतिः।।५४२।।
यजेत राजसूयेन शुभकाले महाद्युतिः।
सूर्यवंश्यः चन्द्रवंश्यः त्रिमूर्त्यंशविराजितः।।५४३।।

वशी दृढव्रतश्शूरो नयचक्षुः बलोज्वलः।
यशसे राष्ट्रसिध्यर्थं प्रजादीनां विशेषतः।।५४४।।
महाफलावाप्तिहेतुं तं सर्वं मनुते बुधाः।
तेनैव नृपतेस्तस्य स्वर्गवासादिकं फलम्।।५४५।।
जगत्यां महती कीर्तिरेधन्ते सत्सुतादयः।
प्रकृतीनां शुभप्राप्तिरिति वेदेषु निश्चितम्।।५४६।।
अतो महीपतिः काले कुर्यात् तं तन्त्रपारगैः।
यथाक्रमं यथाकालं दोषहीनं गुणोत्तरम्।।५४७।।
तुष्यन्ति तेन पितरो देवाश्च मुनयस्तथा।
प्रसीदन्ति च कालेषु तेन सर्वत्र सम्पदः।।५४८।।
नृपाणामभिवर्धन्ते राज्याङ्गेषु न संशयः।
मतिमान् नीतितत्वज्ञो महीपालो दृढव्रतः।।५४९।।
निस्पृहः सर्वकर्माणि कुर्वन्नीश्वरभक्तिभाक्।
तदर्पितस्वात्मफलः राजते सर्वमानितः।।५५०।।
तं श्रीरालिङ्गति मुहुः तद्राष्ट्रं प्राप्तवैभवम्।
साधूनां वासयोग्यं च वर्धते नात्र संशयः।।५५१।।
अतः स्वात्मफलासक्तिरहितः कर्म शास्वतम्।
कुर्वंश्च भूपतिः सर्वक्षेमभाक् सर्वमानितः।।५५२।।
निष्प्रयोजनकार्याणि त्यक्तव्यानि मनीषिभिः।
विशेषतो भूपतिभिः तदनर्थाय कल्पते।।५५३।।
तस्मात् कार्यारम्भकाले तत्पूर्वं वा विशेषतः।
मन्त्रिभिस्सम्यगालोच्य निश्चितं बहुधात्मकम्।।५५४।।
महाफलप्रदं वापि कर्मकुर्वन्महीपतिः।
कीर्तिभाक् सुखभाक् नित्यं राष्ट्रक्षेमाय दीक्षितः।।५५५।।

## राज्ञा स्वकार्यं सर्वं मण्डले निवेद्यैव कार्यमिति कथनम्

स्वकार्यं परकार्यं च पूर्वमालोच्य साधुभिः।
परीक्षितं निश्चितं चावेदयेन्मण्डले तथा।।५५६।।
राष्ट्रे जनपदे भूपः प्रकृत्या कारयेत् क्वचित्।
इति भूपालमण्डने राज्ञां विशेषगुण राजनीतिक्रमादिवर्णनम्।।

## अथ तृतीयोऽध्यायः

## अथ महिष्यादीनां नीति क्रमकथनादिः

### राजमहिषीगुणवर्णनम्

पतिव्रता महाभागा महिषी राजवल्लभा।
सती च सत्कुले जाता सद्गुणैः भूषितानिशम्।।१।।
अज्ञातकोपा चतुरा नित्यं भर्तृहितैषिणी।
वीरपत्नी क्षत्रियाणी वात्सल्यभरिता भृशम्।।२।।
गुरुदेवार्चनपरा सन्ततं मृदुभाषिणी।
धर्मत्राणपरा नित्यं शास्त्रविश्वासशालिनी।।३।।
हिता सिद्धौषधिरिव नानाभीप्सितदायिनी।
सेवेत मनसा वाचा कर्मणा बहुधा तथा।।४।।
राजानं पट्टमहिषी धर्मत्राणादिसिद्धये।
छायेव तस्य कुशला विदुषी सत्सुता तथा।।५।।
स्वरूपरूपसदृशकार्या दोषविदूरगा।
जितेन्द्रिया विशालाक्षी दयामेदुरमानसा।।६।।
यशस्विनी साधुवृत्तिः  सेवेत पतिमन्वहम्।
चित्तौत्सुक्यप्रदा काले तस्य राजति वल्लभा।।७।।

## महिष्या प्रातःकर्तव्यविशेषकथनम्

कर्पूरलतिकेवास्य नेत्रानन्दकरी भृशम्।
उत्थाय स्वासनात्प्रातः निध्याय च रमां तथा।।८।।
सरस्वतीमुमां दिव्या मातृश्च निजवल्लभम्।
प्रणम्य तं च विनयात् मत्वा तं निजवल्लभम्।।९।।
देवांशलसितं नित्यं तेजसा भास्वरं क्रमात्।
तत्प्रियाण्यपि कार्याणि कुर्वन्ति कुशला सती।।१०।।
राज्याङ्गकार्याण्यचिरात् यथा स कुरुते पतिः।
तथा सेवेत सततं तन्मनोरञ्जनी मुहुः।।११।।
तद्वियोगासहा नित्यं हृष्टे हृष्टा दृढव्रता।
आपत्काले धैर्यदा च क्षमाभूषणभूषिता।।१२।।

## पतिशुश्रूषावर्णनम्

डम्भासूयादिमुक्ता च जनवात्सल्यशालिनी।
इष्टान्नस्रक्चन्दनादिप्रदा नित्यं पतिव्रता।।१३।।
यथाकालं भाषणादिदानैः तत्प्रियकारिणी।
पापभीता धर्मपरा राजपत्नी मनोहरा।।१४।।
पतिं सेवेत सततं प्रजाभिर्मानिता तथा।
नित्यदानव्रता सैषा श्रोत्रियेषु विशेषतः।।१५।।
सत्पुत्रा सद्गुणोपेता नित्यं दोषविवर्जिता।
चित्तानुकूलकार्यज्ञा राज्ञी सर्वहिते रता।।१६।।

प्रातर्मध्यन्दिने ह्येवं सायं रात्र्यामथापि च।
कालोचितानि कार्याणि कुर्वन्ति राजते भृशम्।।१७।।
मनसा नातिलङ्घेत कर्मणा वपुषा तथा।
चिन्तयन्ती कीर्तयन्ती तमेव निजवल्लभम्।।१८।।
देवतांशोज्वला नित्यं मन्मथं नररूपिणम्।
नृपं चामितदातारं सत्यधर्मपरायणम्।।१९।।
एवं हि पट्टमहिषी सेवेत पतिमुत्तमम्।
तद्विरुद्धाणि कार्याणि त्यजन्ती दूरतो भृशम्।।२०।।
स्वयमालोच्य बहुधा प्रजारक्षणदीक्षिता।
हितानि नानारूपाणि कुर्वन्ती राजते भृशम्।।२१।।

## अमात्यादीनां कर्तव्यविशेषकथनम्

अमात्यो वा मन्त्रिवर्यः देशकालस्वरूपवित्।
राजानं राजपत्नीं च देवतांशसमुज्वलाम्।।२२।।
चिन्तयन् सततं भक्त्या विश्वासेन मुहुर्मुहुः।
सेवेत प्रियकार्याणि हितानीह महीतले।
न केवलं मर्त्यरूपः स भूपतिरिति स्मृतः।।२३।।
सा च साध्वी महाभागा सद्गुणैर्नित्यमण्डिता।
सर्वासां प्रकृतीनां तु नित्यमङ्गलदेवता।।२४।।
कल्याणी कमलाक्षी चाज्ञातदोषा मनस्विनी।
इति तां चिन्तयेन्मन्त्री कीर्तयेदपि नित्यशः।।२५।।
तयोर्हितानि कार्याणि क्षेमदान्यपि तत्ववित्।
कुर्वंश्च कारयन काले मन्त्री राजति मन्त्रवित्।।२६।।

सेनेशो मन्त्रिवर्यश्च राज्यतन्त्रस्वरूपवित्।
राजाज्ञापालनोद्युक्तः प्रजारक्षणतत्परः।।२७।।
हितार्थी हितकारी च सूक्ष्मधीर्धैर्यभासुरः।
अप्रधृष्यो गभीरात्मा दीर्घदर्शी दृढव्रतः।।२८।।
नित्यं सद्गुणसम्पन्नः सेवेत नृपमीश्वरम्।
यथापराधदण्डी च सेनेशो मन्त्रवित् स्वयम्।
राज्याङ्गं बहुरूपन्तु रक्षेन्नित्यमतन्द्रितः।।२९।।
शान्तो दान्तो वशी नित्यं सद्गुणैरभिभूषितः।
शिरस्त्राणलसन्मूर्धा पट्टवस्त्रोत्तरीयकः।।३०।।
साञ्जलिःकुशलो दक्षः निकटं प्राप्य भूपतिः।
राज्ञो वा युवराजस्य सेवने दत्तलोचनः।।३१।।
तेषां हितप्रदो नित्यं मन्त्री राजति मन्त्रवित्।
राजोपचारनिरताःमहिष्याश्च तथैव च।।३२।।
ये च मेधाविनश्शान्ताःविधानज्ञाः स्वयं तथा।
जितेन्द्रियाःकार्यकाले स्वरूपादिविदस्तथा।।३३।।
याश्च स्त्रियस्सम्प्रयुक्ताःरक्षाकर्मणि तत्र हि।
प्रासादे हर्म्यके वापि रतिगेहे तथैव च।।३४।।
स्नानागारे रहःस्थाने स्थलेष्वन्येषु च क्रमात्।
यथोक्तरक्षा कर्तारः यथाकालमतन्द्रिताः।।३५।।
गर्वक्रोधादिनिर्मुक्ताः सन्ततं प्रियवादिनः।
दिव्यालङ्कृतिदक्षाश्च तथा सौभाग्यवर्धकाः।।३६।।
रूपयौवनसम्पन्नाः या देव्याःपरिचारकाः।
शान्ता दान्ताःप्रसन्नाश्च स्वस्वकार्यकृतश्रमाः।।३७।।

अन्यकर्मविधानज्ञाः तदाज्ञापालनोत्सुकाः।
कुलक्रमागताश्शुद्धाः राजन्ते दोषवर्जिताः।।३८।।
नित्यं तत्प्रियकारिण्यो राजभार्यात्मदेवताः।
मधुरस्वरभाषिण्यो हृद्ययौवनमण्डिताः।।३९।।
प्रीतिसन्मानतो वृद्धिमाप्ताःकार्यविचक्षणाः।
कुलशीलगुणोपेताः चतुराः प्रश्रयान्विताः।।४०।।
लेखानयनकार्ये च द्वाररक्षाख्यकर्मणि।
अलङ्कृतौ भाषणे च तथा व्यजनकर्मणि।।४१।।
स्रक्चन्दनादिदानेषु तथाभोजनकर्मणि।
फलमूलादिदाने च नियोगाख्येऽपि कर्मणि।।४२।।
सर्वावस्थोपचारेषु राज्ञो राज्ञास्तथैव च।
युवराजस्य पुत्राणां पुत्रीणामथवा तथा।।४३।।
प्रासादरक्षा कार्येषु विविधेष्टप्रदेषु च।
ये च दक्षाः सन्नियुक्ताः सर्वदोषविवर्जिताः।।४४।।

## राजचेटीनां गुणादिवर्णनम्

ये च कञ्चुकिनो दक्षाः याश्च रूपादिभासुराः।
औषधादिप्रदानेषु नियुक्ता या गुणोज्वलाः।।४५।।
अनुरक्ताश्च या नानाकार्येषु दृढपाटवाः।
नानाविधनियोगेषु श्रद्धाकौशलभासुराः।।४६।।
ते सर्वे ताश्च सर्वाश्च राजन्ते राजमानिताः।
तैरेव राजभवनं राजते मङ्गलास्पदम्।।४७।।

महाभाग्यवशादेतत् भविष्यति महीतले।
अन्तःपुरेषु सञ्चारकार्येऽभीष्टप्रदानके।।४८।।
रक्षणे बालिकादीनां मधुराभाषणे तथा।
रूपयौवनसम्पन्नाः चित्तरञ्जनदायिनः।।४९।।
ये च वा याश्च चतुराः नानाभावक्रियादराः।
सादरं पार्श्वगाश्चापि कालोचितकलारताः।।५०।।
जितक्रोधगुणाढ्याश्च न लुब्धाःकार्यवेदिनः।
भ्रमदोषादिहीनाश्च कार्यपाटवभासुराः।
चित्तरञ्जनकार्येषु स्तुतिवाक्ये तथैव च।।५१।।
युक्तिप्रदाने मनसः तथोल्लासक्रियास्वपि।
ये नियुक्ताः प्रियालापे याश्च वा यौवनोज्वलाः।।५२।।
यथाकालक्रियादक्षास्ते राजन्ते नृपान्तिके।
गुणसौन्दर्यचातुर्यधैर्याद्यैर्या विभूषिताः।
ये खड्गप्रासहस्ताश्च दृढबुद्धिक्रियादराः।।५३।।
ते सर्वे सर्वकालेषु नानारूपेषु कालतः।
प्रयोगेषु नियोज्येषु धनदारादिरक्षणे।।५४।।
राजन्ते नृपहर्म्येषु कृतस्वस्वक्रियाशताः।
देवतानां गुरूणां च विप्राणां च विशेषतः।।५५।।
श्रोत्रियाणां शास्त्रविदां तथा राज्ञां निषेवणे।
पूजास्वतिथिसत्कार्येष्वपि दत्तादरा नराः।।५६।।
राज्ञां प्रासादभवनेष्वप्रमत्ताः क्रियाकराः।
जितक्रोधादिकाः सन्तः वशिनश्चाङ्गधूर्वहाः।।५७।।
युक्तायुक्तविवेकज्ञाः शुभकाले विशेषतः।
समर्था भाषणे भोज्यदाने चाह्वानकर्मणि।।५८।।

नितरां ये समर्थाश्च समयज्ञाः कळाविदः।
एवं विधेषु कार्येषु नानारूपेषु नित्यशः।।५९।.
डम्भासूयादिमुक्ताश्च राजन्ते परिचारकाः।
नृपाज्ञाकलनोद्युक्ताः सेवका मेधयान्विताः।।६०।।
द्वारपाः पुरुषा ये च गर्वक्रोधादिवर्जिताः।
धीराः कर्मसु ते नित्यं नानारूपेषु सद्मसु।।६१।।
आरम्भादीन् विदित्वैवं कुर्युः कार्याणि सादरः।
अन्तः पुरेषु या नार्यो राजविश्वासमानिताः।।६२।।
अमात्या वाहिनीशानाः प्राड्विवाकादयस्तथा।
बालिका याश्च बालाश्च युवराजमुखास्तथा।।६३।.
तेषामाज्ञाकराः भृत्याः तदाराधनतत्पराः।
सन्ततं चाप्रमत्ताश्च नानाकर्मसु शिक्षिताः।।६४।।
कञ्चुकैश्च शिरस्त्राणैरन्यैश्चाभरणादिभिः।
भासुराः कार्यनिरताः शोभन्ते किङ्करास्तथा।।६५।।
सुन्दर्यःपुरुषाः कन्याः प्रातस्सायन्तनादिषु।
वेदाभ्यासादिपठनैः लेखनैर्गायनैरपि।।६६।।
नीयुः कालन्तु सफलं धनगर्वादिवर्जिताः।
देवतायतनं विप्रं गांच सस्यक्षितिं तथा।।६७।।
शुभस्थानं यागशालां भूधरं कुसुमादिकम्।
मनसा कर्मणा वाचा कदाचिन्नापि दूषयेत्।।६८।।
गुरून् मुनींश्च मान्यांश्च वेदशास्त्रादिकं तथा।
धनानि नवरत्नादीन् अग्रजान् वंश्यजानपि।।६९।।
मानयित्वा यथाकालं यथाकालमतन्द्रिताः।
शोभन्ते गुणवन्तश्च सद्भक्त्यादिविभूषिताः।।७०।।

ततःक्षेमं यशः प्राप्य वर्धन्ते नात्र संशयः।
मङ्गलावाप्तये यानि निर्दिष्टानि मुनीश्वरैः।।७१।।
तानि कार्याणि कुर्वन्तः शोभन्ते दासभृत्यकाः।
नृपपुत्रादयो ये च ते सर्वे विनयान्विताः।।७२।।
दुष्क्रियां दुर्भाषणं च दुष्टैस्सङ्गं विशेषतः।
आबाल्यात्तु परित्यक्त्वा साधुसेवनतत्पराः।।७३।।
शास्त्रादिपठनोद्युक्ताःकलाज्ञाःमितभाषिणः।
स्वेषां परेषां भूत्यर्थं कृतयत्नाश्च नित्यशः।।७४।।
राजन्ते राज्याङ्गवृद्ध्यै ते मान्याश्च मनीषिभिः।
क्रन्दनं दुर्भाषणं च मिथःकलहमेव च।।७५।।
दिवास्वापादिकं दुष्टसङ्गादीन् सर्वथा त्यजेत्।
चौर्यं च पैशुनं यत्र यत्र द्रव्यव्ययादिकम्।।७६।।

## राजपुत्राणां गुणानुवर्णनम्

आबाल्यं ते परित्यज्य सर्वक्षेमाभिवृद्धये।
साधुकर्मण्यभिरताः राजन्ते राजपुत्रकाः।।७७।।
शुभाचाराः शुद्धवाचः देवभक्त्यादिमण्डिताः।
दुर्गुणैश्च परित्यक्ताःशास्त्राभ्यासादितत्पराः।।७८।।
गुरुभक्त्यादिसम्पन्नाः शान्तात्मानो दृढव्रताः।
धार्मिकाः सत्यवाचश्च राजन्ते राजपुत्रकाः।।७९।।
श्रद्धालवो जागरूकाःस्वस्वकार्येषु नित्यशः।
धनरक्षाकरा नित्यं शीलरक्षाकरास्तथा।।८०।।

परदारेषु विमुखाः स्वदारैकपरायणाः।
कुलशीलवयःकालयोग्यकर्मरतास्तथा।।८१।।
गम्भीरदर्शना नित्यं वात्सल्यादिविभूषणाः।
राजन्ते भूमिपालानां सुताद्याः राजवेश्मनि।।८२।।
यत् वाहनं क्षत्रियाणां शास्त्रेषु परिकीर्तितम्।
शुभाय तेन गमनं तेषां शस्तमितीरितम्।
ग्राह्यं यशस्करं यच्च वस्त्रभूषादिधारणम्।।८३।।
आद्रियन्ते च तत्सर्व कुलीना नृपपुत्रकाः।
आयुष्मन्तः कीर्तिमन्तः स्वदारैकपरायणाः।
राज्यश्रीवृद्धिशीलाश्च नानोपायविदः स्वयम्।।८४।।
न प्राप्नुवन्ति भेदं तु भूपालाश्च पितुस्तथा।
परस्परस्नेहबद्धाः हस्तसंज्ञादिवेदिनः।।८५।।
संक्षिप्तार्थप्रदाःकाले नानासिद्धान्तवेदिनः।
विचारज्ञाः कार्यदक्षास्साङ्गोपाङ्गविदस्तथा।।८६।।
शास्त्राणां शस्त्रशास्त्राणामन्येषां च क्रमादमी।
मन्त्रिमुख्याश्च कालज्ञाः सेनापत्यभरार्हताम्।
प्राप्नुवन्ति परीक्षासु नानारूपासु सर्वथा।।८७।।
श्रेष्टाःप्रकारकज्ञाश्च गुरवो मन्त्रिणस्तथा।
राजवंश्याश्च वीरत्वख्यापने दत्तदृष्टयः।।८८।।
अनाविलधियःकाले काले शत्रुभयङ्कराः।
मेधोज्ज्वलाः दर्शनीयाः नानाभरणभूषिताः।।८९।।
एवं विधगुणैस्सद्भिः भासुरा भूसुरा यथा।
सखायो राजपुत्राणां राजन्ते नित्यतेजसः।।९०।।

भिषजःकालवेत्तारःरक्षका धनरक्षकाः।
अन्तःपुरस्थाश्च तथा द्वारपालाश्च सद्मसु।
नानाक्रियाकारिणस्तु ये जनाःपरिकीर्तिताः।।९१।।
ते सर्वे कार्यकुशलाः भवितव्याःस्वभावतः।
मेधोज्वलाः जितक्रोधाःवशिनः शुभकाङ्क्षिणः।।९२।।
समदुःखसुखाःकाले क्रमज्ञाः क्रमकारिणः।
राजविश्वासपात्राश्च भवितव्याः शुभर्धये।।९३।।
पापभीताः सत्क्रियासु कृतमेधा यशःप्रदाः।
त एव नृपहर्म्येषु राजन्ते दोषदूरगाः।।९४।।
श्रमकार्येषु युद्धादावम्लानरुचयो भृशम्।
तत्वज्ञा नीतिशास्त्राणां वेदानामपि नित्यशः।।९५।।
चतुर्वर्गफलप्राप्तिलालसाः विजितश्रमाः।
नृपपार्श्वस्थानयोग्याः नृपाणां कीर्तिवर्धकाः।।९६।।
पक्षपातानभिज्ञा ये ये परं धैर्यभूषणाः।
ये वा निराकुलाः काले गम्भीरप्रकृतश्च ये।।९७।।
रुद्रवत् भीषणाः कोपे प्रकृत्या शान्तिभूषिताः।
राज्याङ्गं वृद्धिमाप्नोति तैरेवेति विनिश्चितम्।।९८।।
शान्तात्मानः स्वभावात् ये राजभक्तिसमन्विताः।
विद्यावन्तश्च मधुरभाषणाः सद्गुणोज्वलाः।।९९।।
परिचर्यादिषु तथा दक्षा ये निश्चिताः क्रमात्।
नृपाणामन्तिकं प्राप्य ते जयन्ति क्रियाकराः।।१००।।
राज्याङ्गकार्येषु नृपो तान् नियोज्य यथाक्रमम्।
कृतकृत्यो यशस्वी च राजते नात्र संशयः।।१०१।।

परेषां निन्दयाहीनं  सत्यरूपन्तु यो नरः।
नृपाणां सन्निधिं प्राप्य विनयप्रीतिपूर्वकम्।।१०२।।
कालोचितं युक्तियुक्तं  प्रत्युत्तरमथापि वा।
वदत्येष महीपालमानितो भवति ध्रुवम्।।१०३।।
नाना सद्गुणसम्पन्नाः कार्यदक्षाः स्वभावतः।
धैर्यस्थैर्यादिनिलयाः ते मता हितदायिनः।।१०४।।
सूक्ष्मग्राही तत्वविच्च कालानुगुणकार्यवित्।
तन्द्रालस्यादिहीनश्च किङ्करो नृपसन्निधौ।।१०५।।

## विद्यामाहात्म्यकथनम्

नियोगं प्राप्य सदसि प्रियकृत् प्रीतिभाक् भवेत्।
मानवानां तु सर्वेषां विद्याकीर्तिकरी मता।।१०६।।
ददत्यभीप्सितं काले  शास्वतं धनमुत्तमम्।
विद्यया हि पुमान् लोके तरत्यापदमञ्जसा।।१०७।।
विद्यावन्तं मानयन्ति नृपाद्या भूषणादिभिः।
विद्याहीना न शोभन्ते मणयो निष्प्रभा यथा।।१०८।।
कान्तेव हितदा नित्यं नानाश्रेयःप्रदा तथा।
स्वदेशे परदेशे च विद्याबन्धुरुदाहृता।।१०९।।
महाकार्यफलावाप्तिसाधका चापि सा मता।
तमोहन्त्री च विविधतत्वज्ञानप्रदा नृणाम्।
निरूपिता च मुनिभिः प्रतिजन्मप्रयोजना।। ११०।।
नानायुक्तिकरी काले विद्यैव परमं धनम्।

## विद्याव्यवस्थाकरणकथनम्

अतो विद्यां नृपालस्तु प्रासादे वर्धयेत् क्रमात्।।१११।।

## बालिकानामपि विद्याभिवृद्धिःकार्येति कथनम्

बालिकानाञ्च बालानां किङ्कराणामपि क्वचित्।
कार्यनिर्वहणार्थाय तां विद्यां वर्धयेत् नृपः।।११२।।
तयैव परमं सौख्यं मनस्तुष्टिर्यशस्तथा।
इह सञ्जायते नृणां किङ्कराणां विशेषतः।।११३।।

## वैद्यशालानिर्माणकथनम्

व्याधिप्रशमनं कार्यं भूभृता नयचक्षुषा।
किङ्कराणां तथान्येषां सर्वकार्यार्थसिद्धये।
स्थापयित्वारोग्यशालां प्रासादे पृथिवीपतिः।।११४।।
आरोग्यं वर्धयेत् काले राज्याङ्गस्थापनाय हि।
रङ्गशालाञ्च विविधरसानन्दप्रदां नृपः।।११५।।
नेत्रानन्दकरीं चित्रशालामपि तथा क्वचित्।
तथैवायुधशालाञ्च सर्वरक्षाकरीं शुभाम्।।११६।।
धनशालां धान्यशालां द्रव्यशालां तथा नृपः।
गोशालामश्वशालाञ्च वाजिशालां तथैव च।।११७।।
तथान्यां मृगशालाञ्च स्थापयेत् शास्त्रमार्गतः।
प्रमोदानन्दजनकं यद्यत् शास्त्रेषु निश्चितम्।।११८।।

मण्टपानां च शालानां भौमानामप्यनेकधा।
चूलीगृहाणां विविधवेदीनां परिवर्त्मनाम्।।११९।।
स्थापनं कलयन्निन्धे प्रासादे पृथिवीपतिः।
कुलदेवीमन्दिरं च त्रिमूर्तिस्थापनं तथा।।१२०।।
सप्राकारं विमानादिभासुरं क्षेमसिद्धये।
प्रासादे स्थापितं तञ्च मानयित्वा यथा क्रमम्।।१२१।।
परमं विजयं कीर्तिमाप्नुयात् राजसत्तमः।
केळीस्थानं रहःक्रीडास्थानकं विविधं तथा।।१२२।।

## कलारञ्जनव्यवस्थाकार्यमिति कथनम्

अलङ्कृतिस्थानकञ्च सङ्गीतस्थानकं तथा।
सम्भाषणस्थानकञ्च तथालोचनमन्दिरम्।।१२३।।
नवभौमसमायुक्तं रुद्रभौमविराजितम्।
तथा षोडशभिर्भौमैः भासुरं वा क्वचित्स्थले।।१२४।।
आस्थानशालां विविधचित्रस्तम्भसमुज्वलाम्।
सिंहासनालङ्कृतां च सभाध्यक्षासनैस्तथा।।१२५।।
त्रिभौमां पञ्चभौमां वा स्थापयेन्निजमन्दिरे।
सचिवानां तथा सेनानायकानां च धीमताम्।।१२६।।
पृथक् शालां प्रकुर्वीत राज्याङ्गार्थस्य सिद्धये।
गुप्तिस्थानं तथा कार्य सुरङ्गास्थानकं क्वचित्।।१२७।।
अन्नशालां च महतीं प्रकृतीनां सुखप्रदाम्।
विद्याशालां दानशालां रक्ष्यशालां तथैव च।।१२८।।

प्रासादे स्थापयन्निन्धे कीर्त्या ह्यतुलया नृपः।
उदायुधान् तथावीरान् यागरक्ष्यादि कर्मसु।।१२९।।
नियुक्तान् मानयन् राजा कृतप्रासादरक्षणः।
किङ्करान् विविधानेवं स्थापयित्वा विशेषतः।।१३०।।
अन्तःपुरस्य रक्ष्यासु तथा प्राकाररक्षणे।
मन्त्रस्थानस्य रक्ष्यासु धनगेहादिरक्षणे।।१३१।।
अप्रमत्तान् योधवीरान् धीसौर्यादि समुज्वलान्।
नियोज्य पृथिवीपालो यशसा भूषितः स्वयम्।।१३२।।
परमानन्दभाक् नित्यं राजते राजसेवितः।
अनाकुलं तस्य राष्ट्रं स चाजय्यो निरूपितः।।१३३।।
ज्ञानेन लसितो भूपो बलेन च महीतले।
तेजस्वी च यशस्वी च प्राणिरक्षासु दीक्षितः।।१३४।।
स्वर्लोकसुखभाग् नित्यं राजते राजसेवितः।
वार्ताहरान् चारणांश्च दूतांश्च घटकान् तथा।।१३५।।
अदूष्यन् वस्तुरूपादिज्ञानिनश्च महीपतिः।
तत्र तत्र स्थापयित्वा नितरामेव ते भुवि।।१३६।।
पूर्वपुण्यवशात् सत्यज्ञानं च सुखमुत्तमम्।
सद्राज्यं सत्प्रजाः सन्तः सत्पुत्रादिकमेव च।।१३७।।
सन्मन्त्र्यादीन् तथा प्राप्य राजते राजवल्लभः।
धर्मार्थादिक्रमज्ञा ये वशिनः सूक्ष्मबुद्धयः।।१३८।।
क्षत्रवंश्याः मन्त्रिपुत्राः भृत्याः स्निग्धास्तथैव च।
रक्षाकाराश्च दासाश्च राजाज्ञापालनोत्सुकाः।
भासन्ते नित्यमेते तु प्रासादे पृथिवीपतेः।।१३९।।

## गुणिनो राज्ञःफलावाप्तिकथनम्

ये सूर्यवंश्यजनितास्तथा चन्द्रकुलोद्भवाः।
राजानो धार्मिकाश्चैते क्षत्रधर्मपरायणाः।।१४०।।
अजय्या बलसम्पन्ना देवांशैरुज्वलाःपरम्।
अश्वमेधादिकलनादवाप्तामिततेजसः।।१४१।।
गम्भीरवृत्तयो नित्यं चतुरङ्गबलान्विताः।
सत्कळत्राश्च सत्पुत्रास्सत्पौत्राद्याश्च ते भृशम्।।१४२।।
दिशास्वष्टसु भासन्ते किन्नरीगीतिकीर्तयः।
नानाशास्त्रप्रवक्तारो नानाशास्त्रविदः स्वयम्।।१४३।।
देवताराधनपराः ब्राह्मणाराधनप्रियाः।
साधुसंरक्षणपराः दुष्टनिग्रहणे रताः।।१४४।।
धर्मसंरक्षणायैव भुवि प्राप्तोदयाः परम्।
सर्वासां प्रकृतीनां च हितदाः कृतरक्षणाः।
तेषामिदं मण्डनन्तु नारदेन महर्षिणा।।१४५।।

## एतत् ग्रन्थसेवनावश्यकताकथनम्

परमाभरणं क्लृप्तं नित्यश्रीविजयार्थिना।
संसेव्यमेतत् सर्वैस्तु महाकार्यार्थसिद्धये।।१४६।।
यस्मिन्निदं भासतेऽत्र तत्र श्रीरनपायिनी।
विजयश्च भवेन्नित्यं ब्राह्मणा वेदपारगाः।।१४७।।
नित्यवृष्टिः पूर्णफला वसुधा राजते भृशम्।
सर्वासां प्रकृतीनान्तु विविधं क्षेममेव च।।१४८।।

सत्यं सत्यं पुनस्सत्यमुद्धृत्यकरमुच्यते।
मुनिना नारदेनेदं क्लृप्तं भूपालमण्डनम्।।१४९।।
सर्वेषामपि भूपानामिहलोके हितार्थिना।
दिनचर्यादिकं यच्च दुर्ज्ञेयं तत्वगुम्भनम्।।१५०।।
सङ्गृह्य तत्सर्वमपि प्रोक्तवान् नारदो मुनिः।
ब्राह्मणानां क्षत्रियाणां वैश्यानां पादसेविनाम्।।१५१।।

## फलश्रुतिः

हितप्रदं विशेषेण मण्डनं मङ्गळप्रदम्।
श्रेयःपदं च सर्वेषां राष्ट्रक्षेमकरं तथा।।१५२।।
सर्वार्थसिद्धिदं नीतिज्ञानदं नृपमानितम्।
इति श्रुत्वा नारदोक्तं सुनीतिः पार्थिवस्तथा।।१५३।।
परमानन्दभाक् तं तु प्रणम्य च मुहुर्मुहुः।
स्तुत्वा च विविधैः स्तोत्रैः सम्प्राप्यापि तदाशिषः।।१५४।।
अध्यापयामास तदा क्रमपङ्क्तिं यथाश्रुतम्।
राजपुत्रान् मन्त्रिपुत्रान् सूक्ष्ममेधासमुज्वलान्।।१५५।।
तदादि निखिलं क्षत्ररहस्यं पालनक्रमः।
भूतलेऽस्मिन् कृतपदं राजते राजमानितम्।।१५६।।
जयतु जयतु काले सूर्यवंश्यो महीशः
जयतु जयतु काले चन्द्रवंश्यश्च भूपः।
जयतु भुवि च धर्मः प्राणिरक्षा च नित्यम्
भगवति परितुष्टे सर्वमेतत् प्रसन्नम्।।

**इति राज्ञां दिनचर्याविशेषधर्मोपदेशकथनात्मकं भूपालमण्डनं समाप्तम्।।**

S,V.University Oriental Series No: 29
General Editor
Director, S.V.U.O.R.Institute

# *BHŪPĀLA MANDANAM OF DĒVARSI NĀRADA*

*(A Compendium on Arthaśāstra)*

*EDITORS*

**Prof V.Venkataramana Reddy**

*In-Charge Director*

*and*

**Dr T.S.R.Narayanan**

*Research Assistant In Sanskrit*



*SRI VENKATESWARA UNIVERSITY*
*ORIENTAL RESEARCH INSTITUTE*
*TIRUPATI*
*2002*